टाइप और ग्लेज कागजपर छपनेपरभी मूल्य पुस्तकके गुण देखकर थोडाही है । उपसंहारमें प्रार्थना है कि उक्त ग्रंथसे लाभ उठाकर गुणग्राहक सज्जन ग्रंथसंग्रहकर्त्ता तथा संशोधनपूर्वक भाषानुवादक और मुद्रणकर्त्ताको आशीर्वाद देवेंगे। आशा है कि ग्रंथकी त्रुटिको सूचित कर कृतार्थ करेंगे। की. १ ठ.

# जातकसंग्रह भाषाटीकोपेत ।

संसारमें विशेषकरके उसी ग्रंथका समादर है जो कि अपने सजातीय ग्रंथोंमें साररूप है क्योंकि कालचक्रकी विकराल गतिसे अब वह समय नहीं है, जिसमें समस्त शास्त्रोंके रहस्यके जाननेकी बुद्धि शक्ति सामर्थ्य प्रागल्भ्य धारणा दीर्घायुरूप सामग्री प्राप्त हो, आधुनिक समयके मनुष्य प्रथम तो अल्पायु होते हैं तिसपरभी अनेकानेक रोगभय फिर बहुधा विघ्न इतनेपरभी दुर्भाग्य और बुद्धिहीनता आदिसे संकुचित होते चले जाते हैं, फिर कहिये समस्त शास्त्रोंका तत्त्वज्ञान एक व्यक्तिमें किस प्रकार आ सक्ता है इसी कारण समस्त जातकग्रंथोंसे सार २ लेकर जिन विचारोंकी कि जन्मपत्रफलादेशमें आवश्यकता होती है वह सबही समस्त जातकग्रंथोंसे लिखे गये हैं जैसे प्रथमभावके विचारमें रूप, वर्ण, चिह्न, जाति, आयु, सुख, दुःख इत्यादि; द्वितीयभावके विचारमें धन, सुख, नेत्रावयव इत्यादि; तृतीयभावके विचारमें भ्रातृपराक्रम इत्यादि; चतुर्थभावके विचारमें गृह, ग्राम, चतुष्पदवाहन,

भूमि, मित्रमातृपितृसुख इत्यादि; पंचमभावके विचारमें रोग, शत्रुपीडा इत्यादि सप्तमभावके विचारमें जाया, व्यापार, गमन, आगमन इत्यादि; अष्टमभावके विचारमें दुर्ग, अल्प, कष्ट मरणहेतु इत्यादि; नवमभावके विचारमें भाग्य, तीर्थ, धर्मसंबंधि कार्य इत्यादि; दशमभावके विचारमें, राज्य, मुद्रा, व्यापार राजमान, महत्पद, पितृसुख इत्यादि; एकादशभावके विचारमें गज, अश्व, सुवर्ण, वस्त्र लाभालाभ इत्यादि; द्वादशभावके विचारमें हानि, दान, व्यय, कपट इत्यादि विषय प्रसिद्ध २ जातकग्रंथोंके प्रमाणसे संगृहीत हैं इसके अतिरिक्त पंचमहापुरुषलक्षण और चौरासी योग और सब प्रकारके राजयोग प्राचीन महर्षिप्रणीत जातकग्रंथोंसे लिखे गये हैं, कोई विशेष बात छोडी नहीं गईहै जो अन्य जातकग्रंथोंमें पाई जावे। यह ग्रंथ मूलमात्र तौ छपही चुका था परन्तु इसमें सर्वत्र गूढ २ अर्थ होनेसे भाषाटीकासहितकी विशेष मांग आनेके कारण ढाढौलिग्रामवास्तव्य पंडितवर्य ज्योतिर्विद् काशीरामजी पाठकद्वारा सुललित हिन्दीभाषाटीका इस रीतिसे कराई है कि प्रथम मूलार्थविवरण नीचे मूल श्लोक फिर हिंदी अनुवाद विराजमान है। उक्त टीकाकार महानुभावनेभी केवल अपनीही बुद्धिसे नहीं किन्तु मूलपरिशोधनपूर्वक अन्य जातकमतोंसे सामानाधिकरण्यसे टीकाकी रचना की है। मैंनेभी ग्राहकसज्जनोंके प्रमोदार्थ सुन्दर टाइप और ग्लेज कागजपर छापकर तैयार किया है। दाम २॥ रु.

# चर्याचन्द्रोदय।

प्रियवर महाशय ! धर्म अर्थ काम मोक्षोंका उत्कृष्ट साधन एक शरीरके विना दूसरा कोई नहीं है उस शरीरका स्वास्थ्य रखनेके लिये वैद्यशास्त्रोदित उपायही मुख्य साधन है, वैद्यशास्त्रमें आजतक महा २ विद्वानोंने वडे २ ग्रंथ बनाये हैं, परन्तु उनमें दिनरात्रिके आचरणका विशेष रूपसे वर्णन न होनेसे शरीरस्वास्थ्य रहनेमें उनका यथायोग उपयोग नहीं होता इस लिये पाठकज्ञातीय माथुर श्रीकृष्णलालात्मज दत्तरामजीने चर्याचन्द्रोदय नामक ग्रन्थ संकलित किया और संस्कृतानभिज्ञ लोगोंके उपकारार्थ भाषाटीकासे विभूषित किया है, इस ग्रंथसे पूर्वोक्त विषयसे अत्यन्तही उपकार हो सकता है। क्योंकि इसमें १ ऋतुचर्या २ दिनचर्या ३ पाकविधान ४ अमानुपीय भक्षण ५ कुद्दष्टिवर्जनादि अध्याय ६ इन्द्रियोपक्रमणाध्याय इतने प्रकरण वर्णित हैं। इन सबमें अवश्य जानने योग्य शौचादि विचार, रसोई करनेका स्थान, सूपकारलक्षण, नानाविध पाकद्रव्योंके लक्षण, अन्नपरीक्षा, स्त्रीसेवनविधि, रजस्वलागमननिषेध, रात्रि जागरणमें दोष इत्यादि बहुतसे विषय सप्रमाण वर्णित हैं इस लिये महाशय इस निरुपम ग्रंथका संग्रह कर उक्त हेतुको सफल करेंगे। की० १॥ रु० ।

॥ श्रीः ॥

# मनुष्यजातकम्.

---

इदं हि त्रिलोकीललंतिकायमानेन अधिगतसकलावरच-रवरदिनकरप्रवरग्रहनिकरशास्त्रसंभारेण श्रीमत्सामंतचूडामणेः श्रीचंद्रदेवस्य अभिजने निवसतः श्रीशोभनदेवस्य पंडितमंड-लीरत्नकस्य तनयसुमेरोः श्रीकुमारसिंहतनयेन श्रीमत्समरसिंहेन ताजिकपद्मकोशाद्व्यभृंगानाममंदमतिमकरंदवितरणाय निजो-द्योगव्योमगमाविष्कृत्य जन्मफलोपदेशदेशिकोपमितं विंशत्य-धिकाराधिकृतं विरचितं–तच्च ज्योतिर्विच्छ्रीमच्छ्रीधरपंडितेन निजमतिमंदिरे समानीयोदाहरणटिप्पणैः परिष्कृत्य प्रथमं जगदीश्वरमुद्रणालये मुद्रापितम्। ततः पश्चात् बृहत्पाराशरहोरा-हठयोगप्रदीपिकादिकतिपयग्रंथैः सहेदं सोदाहरणं मनुष्य-जातकं सस्वत्त्वं श्रीधरपंडितेन मह्यं दत्तम्। मया च खानदेशी-यरावेरग्रामनिवासिना परशुरामात्मजगोविंदशर्मणा शास्त्रिणा संशोध्य कल्याणनगरे स्वकीये श्रीलक्ष्मीवेंकटेश्वरमुद्रणयंत्रालये मुद्रितम्। तदेतत् विदुषामग्रतः प्रत्यर्पितं समुल्लसतुतराम्। इति प्रार्थयते मुंबइस्थः श्रीवेंकटेश्वर (स्टीम्) मुद्रणयंत्रालयाध्यक्षः कल्याणस्थः श्रीलक्ष्मीवेंकटेश्वराध्यक्षश्च।

श्रीकृष्णदासात्मजखेमराजः.

॥ श्रीः ॥

# अथ मनुष्यजातकज्योतिःशास्त्रस्य-विषयानुक्रमणिका.

| विषयाः | पृष्ठांकः | विषयाः | पृष्ठांकः |
|---|---|---|---|
| दद्रुदोषाङ्कदोषयोगः .... | १०३ | मिथ्याभाषियोगः .... | ११४ |
| खर्वत्वयोगः .... .... | ,, | हास्ययोगः .... .... | ,, |
| खल्वाट्ययोगः .... .... | ,, | द्रोहयोगः .... .... | ११५ |
| मुखदुर्गंधयोगः .... .... | १०४ | चौरयोगः , .... .... | ,, |
| शरीरकार्श्ययोगः .... | ,, | पारदारिकयोगः .... | ११६ |
| अगभंगयोगः .... .... | १०५ | स्त्रियाः परपुरुषरतियोगः | ,, |
| अतिह्रस्वतायोगः .... | १०६ | परदारपराङ्मुखयोगः.... | ११७ |
| वामांगदक्षिणांगपीडायोगः | ,, | दातृत्वयोगः .... .... | ११८ |
| दोषोत्पत्तिसमयः .... | १०७ | इर्ष्यालुयोगः .... .... | ,, |
| इति द्वादशोऽधिकारः १२. | | इति त्रयोदशोऽधिकारः १३. | |
| नरस्य हृद्वाधिपप्रकृतित्व-कथनम् .... .... | १०८ | उपजीविकाप्रशंसा .... | १२० |
| तथाविधप्रकृतित्वे उदाहरणम्. .... .... | , | हृद्देशानुसाराढुपजीविका-निर्णयः .... .... | ,, |
| हृद्पधारत्वनुरूपफलोपदेशः | ,, | सौभाग्ययुक्तत्वयोगः .... | १२१ |
| दशाधिपधातुजं फलम्. | १०९ | व्यभिचारत उपजीविकायोगः .... .... | ,, |
| ग्रहाणा स्थानवशात्फलानि. | ,, | नायकत्वगौरवादियोगः | १२२ |
| कातरयोगः .... .... | ११० | उपजीविकावयोनिर्णयः | ,, |
| शकट्ययोगः .... .... | १११ | गुणियोगः .... .... | ,, |
| क्षमायोगः .... .... | ११२ | शकटार्ज्जार्थिकायोगः .... | १२३ |
| मुखरयोगः .... .... | ,, | हृद्देशानुरूपं शुभमशुभं वा फलं मातुः .... | ,, |
| लज्जायोगः .... .... | ११३ | कर्मणः प्रक....राणि.... | ,, |
| वाक्पटुसुभगकृपालुयोगाः | ,, | वृद्धिसौमंगल्ययोगः .... | १२४ |
| अथ कपट्ययोगः.... .... | ११४ | | |

इति मनुष्यजातकस्यविषयानुक्रमणिका समाप्ता ।

॥ श्रीगणेशाय नमः ॥

अथ

## सटीकं सोदाहरणं

# मनुष्यजातकम् ।



**नत्वा गिरं गणपतिं ग्रहवर्गमुख्यं**
**तं कर्मसाक्षिणमलक्ष्यगुणं गुरुं च ॥**
**श्रीसिद्दिकोक्तगुरुताजकतंत्रदीपात्**
**कर्मप्रकाशमणुदीपकमुद्गिरामि ॥ १ ॥**

उद्यत्कोटिदिवाकरद्युतिनिभं रक्ताङ्गरागांशुकं
हस्तैर्मोदकपाशकाङ्कुशधरं वीणाद्यगीःसंयुतम् ॥
ब्रह्मेंद्रप्रमुखैश्च किन्नरगणैः सिद्धैश्च विद्याधरैः
सेव्यं सत्सुखदं गजेंद्रवदनं वाक्सिद्धिदं तं भजे ॥ १ ॥

व्याख्या—अहं गजेंद्रवदनं भजे ध्यायामि । कथंभूतं वाक्सिद्धिदं वाचा सिद्धिः वाक्सिद्धिः वाक्सिद्धिं ददातीति वाक्सिद्धिदस्तम् । पुनः कथंभूतं उद्यत्कोटिदिवाकरद्युतिनिभम् । पुनः कथंभूतं रक्ताङ्गरागांशुकम् । पुनः कथंभूतं हस्तैर्मोदकपाशकाङ्कुशधरम् । पुनः कथंभूतं वीणाद्यगीःसंयुतम् । पुनः कथंभूतं ब्रह्मेंद्रप्रमुखैः किन्नरगणैः सिद्धैः विद्याधरैश्च सेव्यम् । पुनः कथंभूतं सत्सुखदं सतां सुखदमित्यर्थः ॥ १ ॥

इदानीं निर्विघ्नेन ग्रंथसमाप्त्यर्थं ग्रंथादौ मंगलाचरणं नमस्काररूपं करोमि ॥ गिरीशं दिनेशं गिरं विष्णुगर्मां गुरुं खिदिकं रोमकाचार्यवर्यान् ॥ प्रणम्याथ कर्मप्रकाशस्य वृत्तिं करोमीह वालावबोधाय सम्यक् ॥ २ ॥ व्याख्या—गिरीशमिति । गिरीशादीन्नत्वा कर्मप्रकाशस्य वृत्तिं वालावबोधाय अहं कुर्वे । गिरीशमित्यनेन श्लोकेन वृत्तिं करोमीति या प्रतिज्ञा सा शिष्यादिबोधनार्थम् ॥ २ ॥ नत्वेति कर्मप्रकाशकवृत्तेः प्रथमश्लोको व्याख्यायते । गिरं नत्वा पुनः किं कृत्वा गणपतिं नत्वा ग्रहवर्गमुख्यं सूर्यं नत्वा गुरुं नत्वा । कथंभूतं गुरुं अलक्ष्यगुणं लक्षितुं योग्या लक्ष्याः न लक्ष्या अलक्ष्या अलक्ष्या गुणा यस्य सोऽलक्ष्यगुणस्तं अलक्ष्यगुणम् । श्रीखिदिकोक्तगुरुताजकतंत्रदीपात् कर्मप्रकाशनामानं अणुदीपकं च उद्धरामि । श्रिया युक्तः खिदिकः श्रीखिदिकस्तेन उक्तो यो गुरुताजिकतंत्रदीपस्तस्मात् दीपात् कर्मप्रकाशनामानं अणुदीपकं कर्म प्रकाशयति तत्कर्मप्रकाशम् । एतादृशमणुदीपकं नाम पूर्वकर्मातीतकर्मण उद्योतकं करोमीत्यर्थः ॥ १ ॥

श्रीगर्गादिमुनिप्रणीतमखिलं सत्यादिभिः कीर्त्तितं शास्त्रं जातकशास्त्रमाद्ययवनैर्यद्रोमकाद्यैः कृतम् ॥ तद्धोराजलधेरुदस्य परमं

नत्वा पदाब्जं गुरोर्वक्ष्ये मोदरसादितस्तनु-
भृतां नित्यं चमत्कारिकम् ॥ २ ॥

श्रीगर्गादिमुनिप्रणीतेति स्पष्टोऽर्थः ॥ २ ॥

यत्कर्मेत्यभिधीयतेऽखिलबुधैर्दुर्बोधमध्या-
त्मिकैरत्यासन्नफलं ध्रुवं बलवते कस्मैचिद-
स्मै नमः ॥ यद्वा यद्विहितागमेषु गणकश्रेष्ठैः
स्फुटं दृश्यते रूपं निर्मलदर्पणेष्विव जनै-
स्तेभ्यो महद्भ्यो नमः ॥ ३ ॥

अखिलैः बुधैः यत्कर्म इति अभिधीयते किलेति निश्चयेन अध्यात्मिकैर्दुर्बोधमित्यभिधीयते । कथंभूतं कर्म अत्यासन्नफलम् । पुनः कथंभूतं कर्म ध्रुवमुत्पत्तिविनाशरहितमित्यर्थः । बलवते कस्मैचिदस्मै नमः। यद्वा यद्विहितागमेषु यैर्विहिता आगमा यद्विहितागमास्तेषु यद्विहितागमेषु यैर्गर्गवासिष्ठपाराशररोमकवित्थिकादिभिर्विहितेषु आगमेषु जातकताजिकेषु गणकश्रेष्ठैः स्फुटं अत्यासन्नफलं संवादि दृश्यते केषु कमिव निर्मलदर्पणेषु रूपमिव दृश्यते इति कृत्वा तेषु आचार्येषु विषये नमस्करोमीत्यर्थः ॥ ३ ॥

शीर्षं ग्रीवांसावुरो हृदयपृष्ठे पार्श्वौ गुह्यं
चोरुजानुद्वयं च ॥ जंघे पादौ लग्नपुंसो
ह्यजाद्या ह्यात्मानो राशयो द्वादश स्युः ॥४॥

मेषादिषु ये पापास्तेष्वंगेषु घातं कुर्वंतीत्यग्रे वक्ष्यति व्याधौ तदंगे पीडा युद्धादौ तस्मिन्नंगे घातः तस्मिन्नंगे तिलमशकादिचिह्नानि तादृशान्यंगान्युच्यंते । मेषः शिरः । वृषो ग्रीवा । मिथुनः अंसौ । कर्को हृदयम् । सिंहो वक्षःस्तनाभ्युदरम् । कन्या वामदक्षभागयुतपृष्ठिवंशः । तुला कक्षयोधःस्थितास्थ्नां पार्श्वावित्यभिधीयते । वृश्चिको गुह्यमित्यनेन सगुदमेढ्रमुष्कौ । धनुः ऊरुद्वयम् । मकरो जानुद्वयम् । कुंभो जंघा । मीनः पादौ । लग्नपुरुषस्य मेषादि द्वादश राशयो देहांगानि भवंति ॥ ४ ॥

विषमाः पुरुषाः समः स्त्रियोऽन्ये प्रमुखास्ते च चरस्थिरद्विदेहाः ॥ विषमोदयिनो मृगादयः पट्ठलघवोऽन्ये च समोदया महांतः ॥ ५ ॥

मेष १ मिथुन ३ सिंह ५ तुला ७ धन ९ कुंभाः ११ एते विषमाः पुरुषाश्च । अन्ये २, ४, ६, ८, १०, १२, समाः स्त्रियश्च । ते मेषादयः क्रमेण चरस्थिरद्विदेहा ज्ञेयाः । मृगमारभ्य कर्कावधि विषमोदयिनः लघवश्च । कर्कमारभ्य मृगावधि समोदया महांतश्च ॥ ५ ॥

अजवृषहरयश्चतुष्पदाख्याः समकरधनुष्पराधिका पदाढ्या ॥ सततमलिकुलीरको विपादौ झषकलशावपरे द्विपादकाः स्युः ॥ ६ ॥

मेषवृषसिंहाश्चतुष्पदाः, मकरधनुषोरुत्तरार्द्धौ, पदाढ्यौ कर्क-वृश्चिकौ पदरहितौ, कुंभमीनौ च मिथुनकन्यातुलाधनुःपूर्वार्द्धं कुंभोत्तरार्द्धं च द्विपादाः ॥ ६ ॥

**रक्तः श्वेतः कीररुक्पाटलाभो धूम्रः पांडुः कर्बुरः श्यामलश्च ॥ हेमः पिंगः कर्बुरो बभ्रु-रेते मेषादीनां देहवर्णाः क्रमेण ॥ ७ ॥**

मेषमारभ्य रक्तः श्वेतः शुकतनुनिभः श्वेतरक्तः धूम्रः धूम्रवर्णः शुभ्राधिकलोभ्रवर्णः मरक्तकृष्णः ईषत्कृष्णः गोधूमदीप्तिमान् श्वेतः मधुपिंगः कर्बुरः पीतश्यामरक्तयोगे बभ्रुः एते क्रमेण देहवर्णा ज्ञेयाः ॥ ७ ॥

**चत्वारः सहपंचमैः सनवमैर्मेषादयोऽग्निः क्षि-तिर्वायुर्वारि च नृस्त्रियौ दिननिशे मित्राद्रियौ च क्रमात् ॥ स्युस्त्रैराशिकसंज्ञकाद्रिकुवनाऽ-पश्चैन्द्रादिक्तो दिशो रूक्षोष्णा हिमरूक्षको-ष्णसुरुचो स्निग्धा द्रकाणाश्च ते ॥ ८ ॥**

मेषमारभ्य कर्कान्ताश्चत्वारः स्वस्वपंचमनवमैः सहिताः यथा मेषसिंहधनूंषि अग्निः वृषकन्यामकराः क्षितिः मिथुनतुलाकुंभाः वायुः कर्कवृश्चिकमीनाः जलराशयः १ । ५ । ९ मित्राणि पुरुषाः २ । ६ । १० द्विट् स्त्रियः ३ । ७ । ११ मित्राणि पुरुषाः ४ । ८ । १२ द्विट्स्त्रियः । मेषमिथुनसिंहतुलाधनकुंभाः

दिवाबलिनः वृषकर्कन्यावृश्चिकमकरमीना रात्रौ बलिनः । १ । ५ । ९ मित्रं २ । ६ । १० द्विट् ३ । ७ । ११ मित्रं ४ । ८ । १२ द्विट् १ । ५ । ९ गिरिचारी २ । ६ । १० भूमिचारी ३ । ७ । ११ वनचारी ४ । ८ । १२ जलचारी । एतत्संज्ञानां प्रयोजनं आखेटकगतद्रव्यलाभादिस्थाननिश्चयार्थं ज्ञेयम् । दिशश्च १ । ५ । ९ पूर्वे २ । ६ । १० याम्ये ३ । ७ । ११ पश्चिमायाम् ४ । ८ । १२ उत्तरस्याम् प्रकृतयः १ । ५ । ९ रूक्षोष्णाः २ । ६ । १० रूक्षशीतलाः ३ । ७ । ११ उष्णसुरुचः ४ । ८ । १२ स्निग्धस्निग्धाः । पूर्वोक्तानि निमित्तानि एषां दृकाणेऽपि योज्यानि ॥ ८ ॥

कौर्प्पिः कुलीरघटमीनमृगाः प्रजाख्या
मेषो धटश्च वृषभोऽल्पकसूतयोऽमी ॥
कन्या हरिर्मिथुनचापधरौ च वन्ध्याः
पूर्वापरार्द्धमलितौलिगतं च दग्धम् ॥ ९ ॥

वृश्चिककर्कटकुंभमीनमकरा बहुप्रजाः मेषतुलावृषा अल्पप्रसवाः कन्यासिंहधनुर्वन्ध्याः वृश्चिकस्य पूर्वार्द्धं तुलायाः परार्धं दग्धं निर्वीर्यं ज्ञेयम् ॥ ९ ॥

अजगोयुगसिंहतुलाधनुषां ध्वनिरर्द्धरवा मृगकन्यघटाः ॥ अलिकर्कटकानिमिषा विरवा बहुसंगबहुप्रसवाः स्युरिमे ॥१० ॥

मेषवृषमिथुनसिंहतुलाधनूंषि एते सशब्दाः मृगकन्याघटा अर्द्धशब्दवंतः आलिकर्कमीनाः शब्दरहिताः बहुसंगाः अन्यत्र प्रसवावसरे सशब्दानिःशब्दता अनेनैव वाच्या ॥ १० ॥

**गृहोच्चहद्दांशनवांशकाश्च त्रैराशिकानि ग्रह-पंचवर्गी ॥ खैरामवेदाक्षींन्द्रियभूमिभूतपंक्तयं-शकास्तैः क्रमशो विशेषः ॥ ११ ॥**

बलविचारार्थं पंचवर्गीमाह । गृहोच्चहद्दाद्रेष्काणमुशल्लहाः एते पंचाधिकाराः स्वकीया यदा भवंति तदोत्तमबलं ३० स्वभे २० उच्चे १५ हद्दे १० द्रेष्काणे ५ मुशल्लहे मिश्राधिकारे इमानि बलानि पादोनानि समभेऽर्द्धं शत्रुभेऽष्टमः एवं क्रमेण बलान्यानीय उच्चबलं नीलकंठोक्तरीत्या कार्यम् । अत्र मिश्रा-मिश्रचक्रं दृष्टिवशात् ज्ञेयम् ॥ ११ ॥

**सिंहः कर्कों वृश्चिकमेषौ युग्मकन्यके धनुर्मीनौ ॥ वृषभतुले मृगकुंभौ स्वगृहं क्रमशः खगादीनाम् ॥ १२ ॥**

अथ सूर्यादीनां स्वगृहोच्चनीचान्याह । सिंहः सूर्यस्य गृहं कर्कश्चंद्रस्य मेषवृश्चिकौ भौमस्य मिथुनकन्ये बुधस्य धनुर्मीनौ गुरोः वृषभतुले शुक्रस्य मृगकुंभौ शनेः क्रमश इमानि गृहाणि ॥ १२ ॥

**अंजवृषमृगकन्याकर्कटमीनतुलाः क्रमा-**

दुच्चाः ॥ दशांशिरत्र्यष्टाविंशतितिथिशरभनं-
खांशेतो नीचाः ॥ १३ ॥

मेषः सूर्यस्य वृषश्चंद्रस्य मकरो भौमस्य कन्या बुधस्य कर्कः गुरोः मीनः शुक्रस्य तुला शनेः क्रमशः एषु परमोच्चानि १० । ३ । २८ । १५ । ५ । २७ । २० एभ्यः सप्तमस्थानानि एभिरंशैः परमनीचानि ॥ १३ ॥

अथ हद्दा ।

षट्कृतुवसुशरेन्द्रियाणि मेषे गुरुसितवित्कुभुवां यमस्य चांशाः॥ गजनगगजबाणवह्नयो गाः सितबुधवाक्पतिमंगुभूसुतानाम् ॥१४॥
रसरसशरशैलषट्कयुग्मे बुधगुरुभार्गवभूमिजार्कजानाम् ॥ नगरसपडगाब्धयः कुलीरे कुजसितसोमसुतेज्यसूर्यजानाम् ॥ १५ ॥
षडिषुनगरसर्त्तवश्च सिंहे गुरुसितसूर्यसुतज्ञमंगलानाम् ॥ नगादिगुदधिशैलदृक्युवत्यां ज्ञसितबृहस्पतिभूसुतासितानाम् ॥ १६ ॥
षडिभनगनगेक्षणं तुलायां शनिबुधजीवसितावनीसुतानाम्॥ नगयुगगजबाणषट्ट तथालो

कुजकविसौम्यसुरेज्यसूर्यजानाम् ॥ १७ ॥
रविशरयुगवाणवार्धयोऽश्वे गुरुसितसौम्यय-
मावनीसुतानाम् ॥ गिरिगिरिकरिवेदवार्धिन-
क्रे बुधगुरुभार्गवपङ्गुमंगलानाम् ॥ १८ ॥
नगपडंगशरेपवश्च कुंभे बुधसितजीवमहीसु-
तार्कजानाम् ॥ रवियुगशिखिनन्दवाहवोऽन्त्ये
सितसुरपूज्यबुधारभास्करिणाम् ॥ १९ ॥

इति हद्दाधिपाः ।

षड्भिः श्लोकैः मेषादीनां ये हद्दांशा अधिपाश्च मूलेनैव व्याख्याता एषां प्रयोजनं वक्ष्यमाणतः सौरदशा तत्र लग्नहद्दांशमारभ्य ये अंशास्तानि वर्षाणि तत्र ये अधिपास्ते दशाधिपतयः एतद्वक्ष्यमाणं अत्रैव बोध्यम् ॥ इति हद्दाधिपाः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥

अथ नवांशद्रेष्काणौ ।

अजमकरतुलाकुलीरपूर्वा नवलवजाश्च चतु-
स्त्रिराशिकस्य ॥ पतिरवनिसुताच्च षट्षष्ठो-
ऽप्यजमुखपट्कृत्तिका दृकाणकानाम् ॥ २० ॥

इति नवांशद्रेष्काणौ ।

पूर्वं यानि चत्वारि त्रैराशिकान्युक्तानि तत्र नवांशक्रमो लिख्यते तद्यथापि मेषसिंहधनुःषु मेषाद्या नव नवांशा ज्ञेयाः वृषकन्यामकरेषु मकरमारभ्य प्रत्येकनवनवांशा ज्ञेयाः मिथुनतुलाकुंभेषु तुलाद्या नवनवांशा ज्ञेयाः कर्कवृश्चिकमीनेषु कर्काद्या नवनवांशा ज्ञेयाः कर्कवृश्चिकमीनेषु कर्काद्या नवनवांशा ज्ञेयाः। अथ द्रेष्काणक्रमः ॥ अजमुखं मेषाद्यं द्रेष्काणमारभ्य षट्त्रिंशद्रेष्काणानां भौमात् षष्ठषष्ठाधिपो ज्ञेयः तद्यथा मेषस्य प्रथमद्रेष्काणेशो भौमः द्वितीयेशो रविः तृतीयो द्रेष्काणेशः शुक्रः एवं क्रमेण सव व्याख्याताः। एषां प्रयोजनं ग्रहाणां बलार्थं जातकस्य स्वरूपादिविषयार्थं च ॥ २० ॥

**मेषादिचतुरस्त्रैराशिकेश्वरारविसितार्किभृगवोऽह्नि ॥ गुरुशशिबुधभौमा निशि शनिकुजगुर्विन्दवः सततम् ॥ २१ ॥**

पूर्वोक्तत्रिराशिचतुष्काणां दिवारात्रौ सदेशाः तद्यथा दिवा रविशुक्रशनिशुक्राः रात्रौ गुरुशशिबुधभौमाः सदेशाः शनिमंगलगुर्विंदवः तद्यथा मेषसिंहधनुषां दिवा रविः रात्रौशो गुरुः सदेशः शनिः एवं सर्वेषां ज्ञेयम्। यवनमतमेतत् ॥ २१ ॥

द्रेष्काणपा यवनमते।

**अजे दिवार्को निशि वाक्पतिस्तौ हरौर्वेलोमौ धनुषः सदार्किः ॥ वृषस्य शुक्रोऽह्नि विधुर्नि-**

शायां त्रियोऽन्यथारः सततं मृगेशः ॥२२॥
युग्मस्य मन्दोऽह्नि निशीश्वरो ज्ञोऽन्यथा तु-
लाया घटपः सदेज्यः॥कर्कस्य शुक्रोऽह्निकुजो
निशायामलेर्विलोमौ झपपः सदेन्दुः ॥ २३॥

इति त्रिराशिपतिः ।

अजेति । मेषमारभ्य कर्कपर्यंतं सूर्यशुक्रशनिशुक्राः दिवा रात्रौ बृहस्पतींदुबुधभौमाः सिंहमारभ्य गुरुचंद्रबुधभौमाः दिवा रात्रौ सूर्यासितार्किशुक्राः परेषु आर्किकुजेज्यचंद्राः नित्यं दिवा रात्रौ च ये समरसिंहोक्तास्त्रिराशिपाः एत एव रोमकोक्ता रविरित्यत्र ज्ञेयाः ॥ २२ ॥ २३ ॥

लग्नांकाशांतरैन्द्री दिक् संधूनांतश्च दक्षिणा ॥
द्यूनातुर्यं प्रतीची तु तुर्याल्लग्नांतरुत्तरा ॥ २४ ॥
इति लग्नाच्चतुर्दिशाविभागः ।

सूतिकागृहद्वारशय्यादीनां दिग्ज्ञानार्थमाह । लग्नभुक्तांश-मारभ्य दशमभोग्यांशावधि पूर्वा दिक् । दशमभुक्तांशमारभ्य सप्तमभोग्यांशपर्यंतं दक्षिणा दिक् । सप्तमभुक्तांशमारभ्य चतुर्थभोग्यांशपर्यंतं पश्चिमा दिक् । चतुर्थभुक्तांशमारभ्य लग्नभोग्यांशपर्यंतं उत्तरा दिक् ज्ञातव्या ॥ २४ ॥

## अथांधांशाः ।

षड्भ्यो दशांतं वृषभग्रहेभ्यस्तिथ्यंतमंधा मिथुने च भागाः ॥ कर्के हरौ च स्मृतिभाष्टांविंशा अलौ भैनागांक्षिमृगांककाष्ठाः ॥ २५ ॥

अनेनांधभागा उच्यंते वक्ष्यमाणकाणांधयोगे विवक्षितत्वात् वृषे षडंशमारभ्य दशमपर्यंतमंधभागाः मिथुने नवमभागमारभ्य पंचदशांतमंधभागाः कर्के सिंहे च अष्टादशसप्तविंशाष्टाविंशतितमा अंधभागाः वृश्चिके सप्तविंशाष्टाविंशमयनदशमा अंधभागाः ॥ २५ ॥

मृगेऽगबाहुप्रभृतेर्नवांद्रिप्रांतं घटेऽष्टौ दशहंस्तिचंद्राः ॥ नवोडुपश्चेति विवस्वदिद्धोभागा भवेयुर्द्वितयस्य चांधाः ॥२६ ॥

मकरराशौ षड्विंशतितममारभ्य एकोनत्रिंशांतमंधभागाः कुंभेऽष्टमदशमाऽष्टादशैकोनविंशतितमा अंधभागाः एते यंऽधभागा उक्तास्ते चंद्रसूर्ययोरेव ज्ञेयाः ॥ २६ ॥

क्षीणे विधौ भूकेरबाहुनेत्राग्रहेद्रिशून्यांत्रिवृषेऽथ कर्के ॥ नवेन्दुविंशांदशांतो नृपांतं हरौ स्त्रियां नंदशशित्रयं च ॥ २७ ॥

अथ क्षीणचंद्रे विशेषमाह । वृषे एकविंशद्वाविंशैकोनत्रिंश-त्रिंशतितमाश्चांधभागाः । अथ कर्के एकोनविंशतिविंशतितमावंधभागौ । सिंहे दशममारभ्य षोडशांतमंधभागाः । कन्यायां एकोनविंशतिमारभ्य एकविंशत्यंतमंधभागाः ॥ २७ ॥

चापे नखाद्यं त्रिगुणांतमाद्याद्वितुर्यपंचाथ घटे-ऽधभागाः ॥ सम्यग्विलोक्येंदुरविस्थराशी-न्फलं वदेद्दृष्टिवशाद्ग्रहाणाम् ॥ २८ ॥

धनुषि विंशतिमारभ्य त्रयोविंशत्यंतमंधभागाः । कुंभे आद्य-मारभ्य पंचमांतास्तृतीयरहिता अंधभागाः । इंदुरविस्थराशीन् सम्यग्विलोक्य वक्ष्यमाणरीत्या ग्रहाणां दृष्टिवशात्फलं वदेत् उक्तं च । एतेषु चांधभागेषु सूर्यचंद्रौ तु लग्नगौ ॥ द्वितीयद्वा-दशस्थौ चेन्नेत्रनाशं तदा वदेत् ॥ यदा तौ गुरुशुक्राभ्यां दृष्टौ चेत् स्वल्पदोषता ॥ बुधेन तिमिराक्षः स्यात्पापैर्दृष्टे विना-शकृत् ॥ २८ ॥

तनुधनसहजसुहृत्सुतरिपुजायामृत्युधर्मकर्मायाः ॥ व्यय इति लग्नाद्द्वादश गृहाः स्वना-मरूपफलभाजः ॥ २९ ॥

तनुधनेत्यादिश्लोकः स्पष्टार्थः ॥ २९ ॥

सूर्यादेर्नवमं त्रिशत्रुतनयो लाभांतमेजांत्यौ गृहा हर्षस्थानमिति क्रमात्प्रथमकं द्वितीयकं

स्वं गृहम् ॥ तार्तीयं दिवसे नृणामपरथा स्त्रीणां चतुर्थं नृणां खेंलंब्रं च भुवो ध्रुवं धृतिपदं शेषा गृहा योषिताम् ॥ ३० ॥

इति श्रीकुमारसिंहात्मजसमरसिंहसमुद्धृते ताजिकतंत्रसारे कर्मप्रकाशिकायां मनुष्यजातके राश्यधिकारः प्रथमः ॥ १ ॥

अथ सूर्यादीनां हर्षस्थानान्याह । नवमतृतीयषष्ठलग्नैकादशपंचमद्वादशानि हर्षस्थानानि अन्यानि च स्वगृहाणि अन्यच्च तृतीयं हर्षबलं दिवा पुरुषाणां रात्रौ स्त्रीग्रहाणाम् । दशमभोग्यांशमारभ्य लग्नभुक्तांशावधि चतुर्थभोग्यांशमारभ्य सप्तमभुक्तांशावधि पुरुषाः अन्यत्र स्त्रीग्रहा इत्यत्र लग्नभोग्यांशमारभ्य चतुर्थभुक्तांशावधि सप्तमभोग्यांशमारभ्य दशमभुक्तांशावधि स्त्रीग्रहा बलिनः चतुर्थहर्षबलेन हर्षिताः एवंप्रकारेण चत्वारि हर्षबलानि ॥ ३० ॥

इति श्रीसामुद्रिकेयनारायणनाम्ना कृते कर्मप्रकाशिकावृत्तौ प्रथमाधिकारः ॥ १ ॥

---

अथ ग्रहाणां वर्णाः ।

वर्णाः पाटलगौररक्तशितयः पीतश्च गौरोऽसितोऽर्कादीनां रविभार्गवासृगसुरार्कीन्दुज्ञजी-

वाः क्रमात् ॥ प्रागाद्याः क्षयिचन्द्रभौमरविजा राहुश्च पापा मताः सूर्यासृग्गुरवो नराः प्रवयसः सूर्येन्दुजीवार्कजाः ॥ १ ॥

सूर्यादीनां वर्णाः । सूर्यः पाटलः गौरश्चंद्रः हरिद्रानिभ उक्तः जपाकुसुमनिभो भौमः बुधः ईषत्श्याम-श्वेतः पीतः कुंकुमाभो गुरुः गौरः शुक्रः कृष्णः शनिः राहुः कृष्णवर्णः अर्कादीनामिमे वर्णाः तेषा धातुपक्षयोः प्राच्यादीनां क्रमेण ईशाः । रवि । शुक्रभौमराहुशनींदुबुधगुरवः एते क्रमात्प्रागादिदिगीशाः । अथ क्षीणचंद्रभौमशनिराहवः एते पापाः सूर्येबुधगुरुशुक्राः शुभाः सूर्यभौमगुरवः पुरुषाः अन्ये स्त्रियः, सूर्येन्दुजीवशनैश्चरा वृद्धा वृद्धवयस्काः ॥ १ ॥

शुक्रश्च मध्यमवयाः शिशुरिन्दुजन्मा
भौमो युवा शशिजदेवगुरू प्रभातम् ॥
मध्यंदिनं रविकुजावपरं सितेंदू
संध्याकिरर्ककुजसूर्यसुताश्च वन्याः ॥ २ ॥

शुक्रो मध्यवयस्कः बुधो बालः भौमो युवा । बुधगुरू प्रभाते बलिनौ रविकुजौ मध्यंदिने बलिनौ अपराह्णे सितेंदू बलिनौ संध्यायामार्किः । अर्ककुजशनयो वन्याः ॥ २ ॥

इन्दुः सितश्च जलगौ शशिजामरेज्यौ
सद्भूमिगौ सुरगुरूशनसौ च विप्रौ ॥

क्षत्रं रविः क्षितिसुतश्च विशौ ज्ञचन्द्रौ
शूद्रोऽर्कजः कुजसहस्रकरौ च पित्तम् ॥३॥

इंदुसितौ जलचरौ बुधगुरू सद्वारिणौ । गुरुशुक्रौ विप्रौ रविभौमौ क्षत्रियौ बुधचंद्रौ वैश्यौ शनिः शूद्रः । सूर्यकुजौ पैत्तिकौ ॥ ३ ॥

श्लेष्मा सुधाकरसितौ रविजः समीरो
ज्ञेज्यौ समौ रविकुजौ च चतुःपदाख्यौ ॥
सर्पः शशी बुधयमौ विहगौ सितेज्यौ
मर्त्यौ महःक्षितिखवामरुतां कुजाद्याः ॥ ४ ॥

चंद्रशुक्रौ श्लेष्मा शनिर्वायुः ज्ञेज्यौ समौ समधातुगौ रविकुजौ चतुष्पदौ चंद्रः सर्पः शनिबुधौ पक्षिणौ शुक्रगुरू मर्त्यौ । अथ भौमादीनां तत्त्वानि । भौमस्य महः । बुधस्य पृथिवी गुरोराकाशम्, शुक्रस्य जलम्, शनेर्वायुः ॥ ४ ॥

रविभूमिसुतौ शशिसौम्यसिता रविजो धिप-
णश्च मताः क्रमशः ॥ चतुरस्रसुवर्तुलदीर्घ-
घनाः शनिवत्तमसोऽपि हि रूपगुणाः ॥ ५॥

रविभौमौ चतुरस्रौ चंद्रबुधशुक्राः वर्तुलाः शनिर्दीर्घः गुरुर्घनः राहोरपि शनिवद्रूपगुणा ज्ञेयाः ॥ ५ ॥

शीतो रूक्षोऽसितमलिनरुक्पिंगलो दक्षकर्णे चिह्नी मूखों ग्रथिलकृपणः शान्तको भीरुरार्किः ॥ स्निग्धो रक्तो गुरुजठरकः सव्यकर्णे च चिह्नी धर्मी ज्ञानी प्रहसितमुखः सत्यवादी चूर्णाज्यः ॥ ६ ॥ उष्णो रूक्षो झकटकरतिर्निर्घृणस्तीक्ष्णरौद्रो युद्धोत्साहोऽवितथवचनः स्कन्धिलश्चाविनेयः ॥ रूक्षोष्णोहो वपुषि बलवान् दुर्जयी सर्वरोपी सूर्यश्चात्माद्विनिमितगुणो भूरिशुक्रश्च शुक्रः ॥ ७ ॥ वक्ता भास्वद्दशनरसनाजांघिकः सूक्ष्मदर्शी शास्त्रार्थेन प्रतिहतपरोक्तिर्बुधो लेखकश्च ॥ स्निग्धः शीतः सजलनयनो निर्बलः कार्यसिद्धिर्मान्यो लोकैरपटुरसनो तालकश्चंद्रमाश्च॥ ८॥

लग्ने दशमे यो ग्रहः स्वाधिकोण बली तस्य जातस्य शीतो रूक्षस्वभावो वाच्यः ॥ ६ ॥ ७ ॥ ८ ॥

कटुलवणतिक्तमिश्रितमधुराम्लकषायका रसाः सूर्यात् ॥ अयनमुहूर्तदिवाऋतुमासतदर्द्धाब्दसंख्याश्च ॥ ९ ॥

सूर्यादीनां कटुकलवणतिक्तरसाः अयनादिकालो ज्ञेयः॥ ९॥

इति ग्रहयोनिभेदाः ।

## अथ दृष्टयः ।

नवपंचमतृतीयैकादशदशमचतुर्थिकाः सकला ॥
एकर्क्षस्थाश्चैवं खेटानां पंचधा दृष्टिः ॥ १० ॥

अथ दृष्टयः स्पष्टार्थः ॥ १० ॥

पूर्वाघ्रिहीना सबला समक्षस्नेहप्रदा संगमदृष्टि-
संज्ञा ॥ द्वितीयका त्र्यंशपडंशदृष्टिः सर्वार्थ-
कृत्स्नेहकरी च गुप्ता ॥११॥ तृतीयकापादं-
दृगुच्यते च गुप्तारिरन्योभयसप्तमी च ॥
विवादयुद्धादिकरी तथैकराशिस्थदृक्सर्व-
दृशां बलिष्ठा ॥ १२ ॥

नवपंचमी बलवती पादोना प्रत्यक्षस्नेहप्रदा मित्रप्रदा संज्ञा तृतीयैकादशिका त्र्यंशपडंशदृष्टिः सर्वार्थकृत् गुप्तस्नेहकरी दशमचतुर्थी पादमिता दृष्टिः गुप्तारिभावा सप्तमे संपूर्णा दृष्टिः विवादयुद्धादिकरी प्रत्यक्षशत्रुदृष्टिः प्रदिष्टा एकर्क्षे च संपूर्णा दृष्टिः बलिष्ठा तद्यथा । मुक्तारिणी स्यादेकर्क्षे सप्तमे स्यान्मुक्ताविला ॥ तरव्यादि चतुर्थे तु तिस्रः प्रोक्ता भयप्रदाः ॥ तृतीयैकादशे दृष्टिस्तस्दीस् प्रोक्ता महोत्तमा ॥ एतेन पूर्वेनवांशकेन नवपंचमेति श्लोकोऽपि व्याख्यातः ॥ ११ ॥ १२ ॥

चक्रस्य वामदृष्टेर्दक्षिणदृष्टिर्बलीयसी त्वाशु ॥
यदि शीघ्रमंदमध्ये द्वादशभागास्तदातिबला १३

लग्नमारभ्य सप्तमावधि दक्षिणा दृष्टिः सप्तमाल्लग्ना-वधि वामदृष्टिः सा निर्बला द्वादशभागगा दृष्टिस्तदाऽतिवला दृष्टिः ॥ १३ ॥

तिथ्यर्कवस्वद्रिनवांपनंदाः सूर्यादिकानां निजदीप्तिभागाः ॥ त्रिंशांशमध्ये पुरतश्च पृष्ठे पतंति योगास्तदुपाश्रयेण ॥ १४ ॥

अथ सूर्यादीनां दीप्तांशानाह । तिथ्यर्केति स्पष्टोऽर्थः । तत्त्रिंशमध्ये मंदाश्रितमंशमारभ्य पंचदशभागः पृष्ठे अग्रे पंचदशभागमाश्रित्य योगा भवंति ॥ १४ ॥

उदयनिधंदस्तभूशिवसुतेनवसु यथादिमं बली योगः ॥ सप्तानां चन्द्रस्य तु सधनत्रिषु सत्रिषु कुजस्य ॥ १५ ॥

उदयमारभ्य यानि स्थानान्युक्तानि तेषु नवममारभ्य पूर्वस्थाने योगो बली भवति चंद्रस्य पूर्वोक्तसप्तसु स्थानेषु द्वितीये तृतीये च योगो बलीयान् । कुजस्य यानि पूर्वसप्त-स्थानान्युक्तानि तेषु तृतीये च योगो बलीयान् ॥ १५ ॥

स्वगृहोच्चनवांशेषु त्रिपदत्तुर्यदशांशकेः ॥
येऽर्केदुदर्शिनो दक्षे तेऽत्र दक्षिणहस्तगाः ॥१६॥

इति क्रमप्रकाशिकायां ग्रहाधिकारो द्वितीयः ॥२॥

स्वगृहोच्चस्वनवांशेषु त्रिषड्तुर्यदशांशकैः कृत्वा ये अर्के-दुदर्शनादक्षे दक्षिणभागे नाम सूर्यात् ये द्वादशैकादशदश-मयुतास्ते दक्षिणहस्तगाः शुभप्रदा ज्ञेयाः ॥ १६ ॥

इति सामुद्रिकेयनारायणकृते कर्म्मप्रकाशिकावृत्तौ ग्रहबलयोनिभेदाध्यायो द्वितीयः ॥ २ ॥

## अथ षोडशयोगाः ।

इक्कवालेंदुवारौ तथेत्थशालश्च ईशराफश्च ॥
नक्तं यमया मणऊः कंबूलं गैरिकंबूलम् ॥ १ ॥

अथ षोडश योगा व्याख्यायंते ॥ इक्कलेति श्लोकद्वयेन योगानाह । इक्कवालः १ इंदुवारः २ इत्थशालः ३ ईशराफः ४ नक्तं ५ यमया ६ मणऊः ७ कंबूलं ८ गैरिकंबूलं ९ ॥ १ ॥

खल्लासरं च रद्दं दुरफालिकुत्थं च दुत्थोत्थं-दिवीरं ॥ तंबीरं कुत्थंदुरंको षोडश योगाः स्मृतास्तज्ज्ञैः ॥ २ ॥

खल्लासरं १० रद्दं ११ दुरफालिकुत्थं १२ दुत्थोत्थदिवीरं १३ तंबीरं १४ कुत्थं १५ दुरकं १६ एते षोडश योगाः ॥२॥

अथैषां लक्षणम् ।

केन्द्रं द्वितीयान्वितमिक्कवालमापोक्लिमं चा-खिलमिंदुवारः ॥ एवं स्मृता द्वादश धाम-संज्ञाः पूर्वः शुभश्चाशुभतो द्वितीयः ॥ ३ ॥

एतेषां मध्ये आदौ इक्कबालस्तस्य लक्षणमाह। द्वितीयान्वितकेंद्रं १। २। ४। ५। ७। ८। १०। ११। एतानि इक्कबालस्थानानि अष्टमं विना एषु गताः शुभाः अखिलाः आपोक्लिमस्थानानि ३। ६। ९। १२। एतद्गत इंदुवारः नवमं विनाऽशुभ इत्यर्थः। अथेक्कबालेंदुवारयोः फलानि ग्रंथांतराल्लिख्यंते 'योगेक्कबाले भवति प्रतापी राजा भवेद्धार्मिकसत्प्रवृत्तिः॥ बह्वर्थभोगी सुतदारवांश्च रत्नाश्वनाथः क्षपितारिवर्गः॥' अथेंदुवार आपोक्लिमगाः सर्वे ग्रहाः नवमं विना स्वाधिकाररहिताश्चेदिंदुवारः स्वफलदः नो चेदल्पफलप्रदः। 'इंदुवारे नरो जातो दुःखितो धनवर्जितः॥ स्वमुशलहददस्थः शुभदः परिकीर्तितः॥' इति॥ ३॥

यद्यल्पभागैरुपगम्य मंदं शीघ्रो घनांशं निजदीप्तिमस्मै॥ दत्ते स चोक्तो ध्रुवमित्थशालस्तुल्यांशको मुत्थशिलः स एव॥ ४॥

अथेत्थशालस्य लक्षणमाह। यदि अल्पभागैः शीघ्रः घनांशं मंदं उपगम्य प्राप्य निजदीप्तिं ददाति तर्हि स इत्थशाल उक्तः तथया राशिदृष्टौ सत्यां दीप्तांशादृष्टिसद्भावेन उपचीयमानायां दृष्टौ सत्यां इत्थशालः अथ च शीघ्रे गच्छतो मंदस्याग्रगामिनि मंदे [illegible]

भागयोरुप [illegible]

ऽपि भविष्यति इत्थशालः पूर्वं राशिदृष्टिसद्भावे दीप्तांशदर्शनाभावे

दीप्तांशप्रवेशाभिलापिणि राशावपि शीघ्रे भविष्यदित्थशालः दीप्तांशप्रवेशाभिलापस्तु एकनवांशे संभवति परगाऽप्यभिलाषे तथाऽदृष्टत्वात् शीघ्रमंदाक्रांतभागस्थे पूर्णं भूतसंज्ञमित्थशालं भविष्यद्भूतयोरन्यद्वर्तमानं एवं मुत्थशिलं त्रिविधम् ॥ ४ ॥

हीनोऽथ पृष्ठे स यथोक्तभागै राश्यंतगो वा तदसौ भविष्यत् ॥ यद्येकमप्यंशमसौ पुरस्तात्प्रयाति मंदाच्च तदेशराफः ॥ ५ ॥

हीनः पृष्ठे यथोक्तभागैः कलाराश्यंतगः असौ भविष्यदिति पूर्वमेव व्याख्यातम् । यदि एकमंशं पुरस्तादभ्येति तदा ईशराफः । अथाऽल्पभाः शीघ्रः स्वदीप्तिभागैः कृत्वा आधिकभागं मंदं अभ्येत्य तेजः प्रयच्छति तदा इत्थशालः । स चेदुत्कटस्थानस्वाधिकारस्थस्तदा उत्तमफलदः नो चेदल्पफलदः । अथास्य फलम् । 'योगेत्थशाले च नरः प्रसूतौ धर्मार्थयुक्तश्च सुखान्वितश्च ।' अथेशराफः । राशिदृष्टिसद्भावे दीप्तांशदृष्टिसंभवे अपचीयमानायां दृष्टौ सत्यां तदा ईशराफः । शीघ्रे मंदाक्रांतभागस्थे सति तदा भविष्यदीशराफः तस्मादन्यत्र वर्तमानः दीप्तांशचरमभागस्थीभूतः एवंभूतभविष्यद्वर्तमानत्वेन त्रिविध ईशराफो ज्ञेयः ॥ ५ ॥

द्वयोश्च दृग्वर्जितयोर्यदान्यः पश्यत्युभौ शीघ्रतरोऽन्तरस्थः ॥ पश्चात्ततोऽभ्येत्य महो गृहीत्वा ददाति मन्दाय स नक्तयोगः ॥ ६ ॥

द्वयोर्लग्नपकार्यपयोरित्थशालाभावे तृतीयः शीघ्रः उभयोः इत्थशालं करोति तदा नक्तयोगः । इदं तु तदैव संभवति शीघ्रेणादौ संयुज्य पश्चान्मंदेन मिलति तदा ज्ञेयम् ॥ ६ ॥

मन्दोथवेत्थं द्वितयं च पश्यन्स्थानस्थितोऽ-
थात्मयथोक्तदीप्त्या॥ शीघ्रादुपादाय ददाति
तेजो मंदाय स स्याद्यमयाभिधानः ॥ ७ ॥

एवं लग्नपः कार्यपं पश्यन् एकस्थानस्थितो वा उभयोः साकं इत्थशालं करोति शीघ्रतस्तेजो गृहीत्वा मंदाय प्रयच्छति तदा यमया अयं योगः तदा ज्ञेयः लग्नेशकार्येशयोर्मध्ये यः शीघ्रस्तेन सह मिलित्वा पश्चान्मंदेन सह मिलति तदा यमया ॥ ७ ॥

जातेऽपि योगे रविजोऽथ भौमः शीघ्रस्य
पृष्ठेऽथ पुरोऽरिदृष्ट्या ॥ स्वांशैर्महो ह्येकग-
तस्तु हीनाधिकश्च स स्यान्मणऊनं शस्तः ॥ ८॥

इत्थशालसद्भावे भौमः शनिर्वा शत्रुदृष्ट्या एकर्क्षदृशापि शीघ्रात्तेजो एह्णाति तदा मणऊः । अत्र एकर्क्षदृष्टिः केषांचिन्मते मित्रदृष्टित्वात् पृथक् कथनं ज्ञेयं अयं तदैव संभवति यदि शीघ्रयोरन्ययोरन्यतरेणादौ मिलित्वा पश्चान्मंदेन मिलनपूर्वोपरभावस्त्वंशतास्तस्माज्ज्ञेयः ॥ ८ ॥

कंबूलमेतद्विगतेत्थशाले चन्द्रोऽपि चेन्मुत्थशिलं विधत्ते ॥ मिथः स्वगेहोच्चगताः प्रधानं मध्यं त्रिकाद्ये त्वधमं परर्क्षे ॥ ९ ॥

अनयोर्द्वयोरित्थशालसद्भावे अन्यतरेण चंद्र इत्थशाली तदा कंबूलम् । एतचंद्रेत्थशालवतो ग्रहस्य चंद्रस्य वाऽधिकारभेदसंबंधान्नानाविधिः । तत्राधिकारश्चतुर्विधः स्वोच्चं, स्वक्षेत्रं, उत्तमाधिकारः स्वहद्दात्रैराशिकः, मुशल्लहः, मध्यमाधिकारः मित्रं, समो स्वक्षेत्रादि, हीनोऽधिकारः नीचं, शत्रुक्षेत्रं, अधमोऽधिकारः एवं अधिकारस्य चतुर्विधत्वात्षोडशधा कंबलम् ॥९॥

शून्ये पथीन्दुस्तदनित्थशालः कंबूलमन्येन समं करोति ॥ तद्गैरिकंबूलमिति स्वगेहे स्वोच्चेऽथ भद्रं न परग्रहर्क्षे ॥ १० ॥

इत्थशालसद्भावे चंद्रः शून्याध्वगः उभयोरन्यतरेणेत्थशालोऽपि राश्यंतगोऽन्येन केनचिदाद्ययोरन्यतरेणेत्थशालवता उत्तमाधिकारस्थेनेत्थशाली तदा गैरिकंबूलं यतोऽत्र कंबूलाभयोऽपि चतुर्थग्रहपापकंबूलं निष्पाद्यते ॥ १० ॥

शून्याध्वगो मुत्थशिलो न युक्तो दृष्टो न केनापि शशी न चान्यः ॥ खल्लासराख्योऽशुभकृत्स योगः सर्वेऽपि यस्मिन्स्थगिता ग्रहाः स्युः ॥११॥

इत्थशालसद्भावे पूर्वयोगोक्तयमयाकारकश्चतुर्थो यद्याद्ययो-रन्यतरेणाप्यनित्थशालित्वाद्यमयाकारकौ न स्यात् । उभयो-रन्यतरेण चतुर्थेन वा भावीत्थंशालं वा न स्यात्तदा खल्लासरः । परमेतदेव यदाद्यौ चंद्रस्तृतीय एते त्रयोऽपि बलहीनतया सबलग्रहानित्थशालितया च अशुभत्वं मासाः स्युः अन्यथा इत्थशालसंभवाद्वाशुभता ॥ ११ ॥

वक्रस्य चास्तस्य मृतिस्थितस्य द्वयोस्तु
योगः पतितस्य यः स्यात् ॥ स रद्दनामा ह्य-
शुभः सदैव शीघ्रे शुभे पूर्वमथापरे ते ॥१२॥

इत्थशालसद्भावे द्वावप्यस्तगतौ वक्रगौ नीचगौ शत्रुक्षेत्रगौ षष्ठाष्टमद्वादशस्थौ एतद्वौ तदा रद्दयोगः । यदा द्वौ सबलौ मध्यबलौ वा तदा शीघ्रे केंद्रगे मंदे आपोक्लिमगे आदौ सिद्ध्युन्मुखता अंते नाशः मंदे केंद्रगे शीघ्रे आपोक्लिमगे आदौ कार्यनाशोन्मुखता । अंते कार्यस्य सिद्धिः इदमपि द्वयं रद्दांतर्भूतम् ॥ १२ ॥

मन्देऽधिकारिण्यधिकारहीने शीघ्रे च योगः
स दुःफालिकुत्थः ॥ द्वयोरथान्यो बलयोः प-
रेण स्वोच्चेन योगो दुत्थोत्थदिवीरः ॥ १३ ॥

इत्थशालसद्भावे मंदोऽधिकारी हीनोऽधिकारः शीघ्रस्तदा दुःफालिकुत्थः इत्थशालसद्भावे द्वावप्यबलौ तयोरन्यतरः केन-चिद्बलाधिकेनेत्थशाली तदा दुत्थोत्थदिवीरः ॥ १३ ॥

अन्यर्क्षगामी मकबूलखेटस्तथोपरिष्टान्निज-
दीप्तिभागैः ॥ ददाति तेजोऽपि विनेत्थशालं
तं वीरयोगः कथितः स तज्ज्ञैः ॥ १४ ॥

इत्थशालसद्भावे चंद्रेत्थशालवता चतुर्थेनोक्तयोरन्यतरो बली राश्यंतगोऽन्यर्क्षगामी चतुर्थेन भावीत्थशालवान् तदा वीरयोगः कथितः ॥ १४ ॥

स्वर्क्षोच्चादिग इक्कवालग इनाद्वक्राच्च बाह्यो
बली नापि क्रूरयुतोक्षितो मुथशिली नो नीच-
खेटेन च ॥ मन्देज्यावपरत्र नक्तमुदितौ प्रा-
क्शुक्रसौम्येन्दवः पुंसः पुंसि दिवा स्त्रियो
युवतिभे रात्रौ बलं च स्थिरे ॥ १५ ॥
तुल्यांशे च रवेर्नराश्च गगनाद्धात्रंतमन्ये भुवो
मार्गीतं बलिनश्च कुत्थमुदितं ह्येवं बलस्था-
पनम् ॥ अस्मात्षोडशकंदुरःफमिह चेत्प्रा-
ग्व्यत्ययात्खेचरा निःप्राणाः स्वगृहास्तगाश्च
तमसः पुच्छस्थिताश्चाबलाः ॥ १६ ॥

अथ कुत्थविचारः । तत्र कुत्थं नाम यस्मिन्विद्यमानो ग्रहः कार्यं कर्तुं क्षमो भवति तादृशं बलं कुत्थम् । अथ तस्य विचार एकादशप्रकारैः । स्वर्क्षोच्चहद्दात्रैराशिकदृशल्हगतत्वे

प्रथमः १ इकशालगते सति लग्नदर्शित्वं द्वितीयः २ एतेन द्वितीयाष्टमयोरिकशालमध्यवर्तित्वेऽपि न बलवत्त्वम्। वार्द्धकास्तबाल्यवक्रवार्जितत्वे सति शीघ्रविकलगतिवर्जितत्वं तृतीयः ३ क्रूरग्रहयुतिक्रूरग्रहसकलतुरीयदृष्टिवर्जितत्वं चतुर्थः अत्र युतिर्दशांशावधिरिति ज्ञेयम् ४ । नीचखेटो नाम क्रूरग्रह उत्सर्गतः क्रूरः शुभो वा नीचगतः आपोक्लिमगश्च स्वर्क्षात्सप्तम-, स्थितः स्वहर्षस्थानात्सप्तमगश्च एतादृशेन ग्रहेणेत्थशालवर्जितत्वं पंचमम् ५। ग्रहस्योदयश्चतुर्धा संभवति पूर्वाह्णे उदयः आद्यः अपराह्णोदयः द्वितीयः पूर्वरात्रोदयस्तृतीयः अपररात्रोदयश्चतुर्थः सूर्यादग्रतस्तस्य त्रिभान्तरवर्तिनः पूर्वाह्ण उदयः प्रायः सम्भवति त्रिभमितादग्रे आपञ्चसूर्यांशतरिगते ग्रहे अपराह्णे उदयस्तस्य ग्रहस्य पञ्चादूर्ध्वं नवमावधि पूर्वरात्रोदयः नवमादूर्ध्वमाचक्रसमाप्ति अपररात्रोदयः सपञ्चसूर्यादधिका भौमगुरुशनयो दक्षिणहस्तस्थाः तत्रापि सनवमसूर्यादधिकत्वे बलवत्त्वमेतेषां प्रायः एतेषामपररात्रे उदये सत्येतद्बलं संभवति अपररात्रोदयस्तु तदैव भवति सनवमसूर्यादधिकत्वे सति यावत्सूर्यादूनत्वं यदा तदा अपररात्रोदयः तदा अपराह्णे अस्तः सूर्याक्रान्तनवांशात्सप्तराशेः सप्तमनवमांशकराशिरस्तसंज्ञः। बुधशुक्रौ प्राच्यां तदैवोदयं व्रजतः यदा सूर्यादूनौ तादृशौ तौ पूर्वोदयात्पूर्वास्तं यावदेव तदा दक्षिणहस्तस्थौ ज्ञेयौ तत्र तयोर्न बलवत्त्वम्। यदा तयोः पश्चिमोदयस्तत आरभ्य पश्चिमास्तं यावत् सूर्याधिक्ययोस्तयोः पूर्वाह्णोदयः

पूर्वगत्रौ दर्शनमस्तश्च संभवति तौ द्वावेतौ वलिनौ चंद्रश्चैवं शुक्लपक्षाष्टमी यावत् अस्मिन् श्लोके मंदेज्यग्रहणेन रवेरूर्ध्वकक्षत्वाद्भौमस्यापि ग्रहणम् । यतो रवेरधःस्थानां शुक्रबुधचंद्राणामधोभ्रमत्वमुक्तम् ६ । पुंग्रहाः पुरुषराशौ दिवा वलिनः ७ स्त्रीग्रहाः स्त्रीराशौ रात्रौ वलिनः एवं वलद्वयम् ८ । सूर्यो यत्र कुत्रचिद्राशौ स्थितः यस्य राशेर्नवांशो भवति तद्राशिनवांशगोऽस्तं गतः बली च यस्मिन् कस्मिंश्चिद्राश्यवस्थितोऽपि अनस्तीशसंज्ञां लभते सूर्याक्रांतनवांशासक्तराशेः सप्तमो नवांशासक्तराशिरस्तसंज्ञः तद्राशिनवांशे स्थितं कंचूलं नराः पुरुषाः रविभौमगुरवः दशमाद्भ्रान्तं नाम दशमभोग्यभागाः दशमचतुर्थयोर्मध्यस्थिता राशयः चतुर्थभुक्तभागाश्च वलिनः ९। अन्ये भुवःमार्गातं नाम पूर्वोक्तवैपरीत्येन स्थिताः वलिनः १०। सर्वे ग्रहाः स्थिरराशौ वलिनः द्विस्वभावे मध्यवलाः ११। एवमेकादशधा कुत्थवलस्थापनम् । अस्माद्विपरीतं दुरफं निर्बलास्थापनम् । स्वोच्चत्रिकोणस्वगृहहद्द्रेष्काणकेंद्रस्वनवांशकेषु श्रेष्ठवलम् । सप्तसु नीचशत्रुभे तत्तन्नवांशे पतिते च निंद्यं तदेकादशविधम् । कुत्थव्यत्ययेन तद्यथा पंचवर्गीवलहीनत्वमाद्यम् १। इंदुवारलग्नादार्शित्वे द्वितीयम् २। वार्द्धकास्तबाल्यवक्रयुतत्वं शीघ्रविकलगतिमत्त्वम् ३। पूर्वक्रूरग्रहयुतिक्रूरग्रहसकलतुरीयदृष्टिसहितत्वम् ४। नीचखेटेत्थशालित्वम् ५। भौमगुरुशनीनां पूर्वरात्रोदयित्वं चंद्रबुधशुक्राणामपररात्रोदयित्वम् ६। पुरुषग्रहाणां समराशिस्थत्वे रात्रौ च निर्बलत्वम् ७।

स्त्रीग्रहाणां विषमराशिस्थितत्वं दिवानिर्बलत्वम् ८ । नराः सुखान्मार्गेति स्त्रियः गगनाद्रात्रंतम् ९ । चरराशिस्थित्वं दशमम् १० । सूर्याश्रितराशिनवांशराशिस्थितत्वम् ११ । एवं एकादशधा अथ विशेषो निर्बलत्वे केतुयुता निर्बलाः अर्थाद्राहुयुता सबलाः ॥ १५ ॥ १६ ॥

सूर्यार्कांशगतो विधुंतुदमुखांतर्द्वादशाभ्यंतरे
क्रूरान्मूसरिफस्तथा मुथशिलस्तद्वद्दृष्टोऽ-
शुभः ॥ स्वक्षांस्तांतिमभागगोऽस्तपथगो
नान्येक्षितोऽब्जो बलः शुक्ले भूमिसुतापरे रवि-
सुता युक्ते क्षितश्चाऽशुभः ॥ १७ ॥

अथ चंद्रस्य विशेषः सूर्याद्द्वादशभागांतरे पूर्वं परतो वा व्यवस्थितः अयं अमाशुक्लप्रतिपदोः सम्भवति एवमेव राहोर्द्वादशांशमध्यवर्ती पूर्वं वा पश्चात् क्रूरमुथशिलः क्रूरमूसरिफश्च सकलतुर्यदृष्ट्या पापदृष्टः स्वक्षांस्ते मकरस्थः नास्मिन् कस्मिंश्चिद्राशौ त्रिंशत्तमभागस्थश्चन्द्रभागो नाम शुभाशुभाधिकारवर्जितः अन्येनेक्षितो नाम केनापि ग्रहेण न दृष्टः शुक्लपक्षे भौमेन दृष्टः कृष्णपक्षे शनिना दृष्टः ॥ १७ ॥

पूर्वे पक्षे पुंगते भानुपुत्रे भौमेऽन्यास्मिन्स्त्रीगते
चाल्पदोषः ॥ ज्ञेयस्तात्केश्चापरार्द्धे पुराले
राशिप्रांते क्षीयमाणश्च दुष्टः ॥ १८ ॥

पूर्वे पक्षे इति । शुक्लपक्षे पुंराशिगतेन शनिना दृष्टे अल्पदोषः कृष्णपक्षे स्त्रीराशिगतेन भौमेन दृष्टे अल्पदोषः तुलाया उत्तरार्द्धे वृश्चिकस्य पूर्वार्द्धे स्थितः राशेर्नवमनवांशे स्थितः क्षीयमाणः एतादृशश्चंद्रो निर्बलो दुष्टश्च ॥ १८ ॥

स्वोच्चत्रिकोणस्वगृहं स्वहृद्द्रेष्काणकेन्द्रस्वनवांशकेषु ॥ श्रेष्ठं बलं सप्तमनीचशत्रुभे तत्तन्नवांशे पतिते च निंद्यम् ॥ १९ ॥

स्वोच्चेति ॥ १९ ॥

धनाधिकारोऽपि हि यो विलग्नं न वीक्षते तस्य बलं न वाच्यम् ॥ अल्पाधिकारस्य च लग्नदृष्टौ बलं प्रदिष्टं यवनप्रधानैः ॥ २० ॥

इति षोडशयोगाधिकारस्तृतीयः ॥ ३ ॥

धनाधिकार इति स्पष्टोऽर्थः ॥ २० ॥

इति सामुद्रिकोपनामकनारायणकृतायां कर्मप्रकाशिकावृत्तौ तृतीयाध्यायः ॥ ३ ॥

---

## अथ द्वात्रिंशत्सहमानि ॥

पुण्यं वित्प्रणयौ च शौर्ययशसी स्वं बन्धनं पैतृकं मातृभ्रातृविभूतिदारमरणाध्वाशत्रु-

पारी सुताः ॥ पुत्री कर्म तथा क्षमा च गुरुता जीवो गदा मित्रकृत्सोद्वाहश्रुतवासनाबलवपुर्व्यापारहस्तक्रिया ॥ १ ॥

अथ सहमाधिकारो व्याख्यायते ॥ तद्यथा पुण्यं १ वित् २ प्रणयः ३ शौर्यं ४ यशः ५ स्वं ६ बंधनं ७ पैतृकं ८ मातृ ९ भ्रातृ १० विभूतिः ११ दाराः १२ मरणं १३ अध्वा १४ आशा १५ नृपः १६ अरिः १७ सुतः १८ पुत्री १९ कर्म २० क्षमा २१ गुरुता २२ जीवः २३ गदः २४ मित्रं २५ सोद्वाहः २६ श्रुतं २७ वासना २८ बलं २९ वपुः ३० व्यापारः ३१ हस्तक्रिया ३२ ॥ १ ॥

सूर्यादह्नि विधुं च नक्तमतथा पुण्यं च तद्व्यत्ययाद्विद्याख्यं सुकृतात्तदंतमहनि प्रीतिर्निशि व्यत्ययात् ॥ शौर्याख्यं दिवसे कुजाच्च सुकृतं निश्यन्यथेतद्यशः पुण्याज्जीवमतोऽन्यथा निशि धनं त्वीशाद्धनाख्यं सदा ॥ २ ॥

अथैषां लक्षणानि। अत्र पंचम्यतः शोध्ये द्वितीयांतः शुद्ध्याश्रयः तद्यथा विधोः सूर्यं अपास्य रात्रौ विलोमं लग्नयुक् पुण्यसहमं भवति १ दिवा सूर्याद्विधुं अपास्य रात्रौ विलोमं लग्नयोगो विद्यारूपो भवति २ विद्यासहमात् पुण्यं विशोध्य दिवा लग्नयुक् रात्रौ विलोमं प्रीतिसहमं भवति ३ सुकृतात् कुजं अपास्य दिवा लग्नयुक् निशि अन्यथा शौर्यसहमं भवति ४

जीवात्पुण्यं अपास्य दिवा लग्नयुक् निशि अन्यथा यशः सहमं भवति ५ धनेशं धनाद्विशोध्य सदा लग्नयुक् धनसहमं भवति ६ ॥ २ ॥

बन्धश्चाहनि भास्करेश्च सुकृतं रात्रौ विलोमं दिवा पित्राख्यं तरणेर्यमांतमतथा नक्तं सितेंद्वोरिति ॥ मात्राख्यं सहजं शनेर्दिननिशं जीवं विभूतिर्गुरोः शन्यंतं निशि चान्यथा तु सततं सूर्यात्सितं स्त्र्याह्वयम् ॥ ३ ॥

पुण्याद्भास्करिं विशोध्य लग्नयुतं दिवा रात्रौ विलोमं बंधनसहमं स्यात् ७ शनितः सूर्यं विशोध्य लग्नयुक दिवा रात्रौ विलोमं पित्राख्यम् ८ सिताद्विधुं विशोध्य लग्नयुक् मात्राख्यं रात्रौ अन्यथा ९ जीवात् शनिं विशोध्य लग्नयुतं अहोरात्रौ सहजम् १० शनेः गुरुं विशोध्य लग्नयुतं दिवा विभूतिः रात्रौ विपरीतम् ११ सितात् सूर्यं विशोध्य लग्नयुक् अहोरात्रे दारासहमम् १२ ॥ ३ ॥

मृत्युः संततमिंदुतो मृतिगृहं योगः शनेर्मार्गकृत् मार्गेशान्नवमं नृपाख्यमहनि त्र्यब्धात्समुच्चं भवेत् ॥ गोरंशत्रयमिन्दुतो निशि भवेदाशासिताद्यासितं शत्र्वांत्यमिनात्मजात्क्षितिसुतं पुत्रः सदेन्दोर्गुरुम् ॥ ४ ॥

अष्टमाचंद्रं विशोध्य शनियुक् अहोरात्रं मृत्युः १३ नवमात्रवमेशं विशोध्य लग्नयुक् अहोरात्रं मार्गाभिधम् १४ सूर्यात्तत्सूर्यं अपास्य लग्नवियुक् दिवा नृपाख्यं रात्रौ चंद्रोषार्धं द्रमपास्य लग्नयुक् नृपाख्यम् १५ असितात्सितमपास्य लग्नयुक् आज्ञाख्यम् १६ भौमाच्छनिमपास्य लग्नयुक् अहोरात्रे शत्रुसहमम् १७ गुरुतः इंदुमपास्य लग्नयुक् अहोरात्रं पुत्रसहमम् १८ ॥ ४ ॥

कन्येन्दोर्भृगुजं च कर्मशशिजाद्भौमं विलोमं निशि क्षांतिर्भूमिसुताद्गुरुं च गुरुतोऽब्जाज्जीवमर्कान्निशि॥ वातोऽर्काच्छशिनं च जीवनमिदं जीवाद्यमं चान्यथा रोगोऽब्जाद्द्युनिशं तनुं च दिवसे मित्रं च पुण्याद्गुरुम् ॥५॥

भृगुजादिंदुलग्नयुक् अहोरात्रं कन्यासहमम् १९ भौमाद्बुधं विशोध्य लग्नयुक् दिवा कर्मसहमं रात्रौ विलोमं २० गुरुतो भौमं विशोध्य अहोरात्रे क्षांतिसहमं स्यात् २१ जीवात्सूर्यं विशोध्य चंद्रयुक् गुरुतासहमं रात्रौ गुरुतश्चंद्रं विशोध्य सूर्ययुक् गुरुतासहमम् २२ यमाज्जीवं विशोध्य लग्नयुक् दिवा जीवितं सहमं रात्रौ विलोमम् २३ लग्नाचंद्रं विशोध्य अहोरात्रं लग्नयुक् रोगः स्यात् २४ गुरोः पुण्यं विशोध्य लग्नयुक् दिवा मित्रसहमं रात्रौ विलोमम् २५ ॥ ५ ॥

उद्वाहो द्युनिशं शनेस्सितमिति श्रद्धा
सिताद्भूसुतं शास्त्रं चाह्नि शनेः सुरेज्यमतथा
सौम्याद्विशुद्धेर्बलम् ॥ पुण्याद्वाक्पतिमह्नि
नक्तमतथा चैवं वपुर्व्यावृतिर्नित्यं ज्ञात्क्षितिजं
शनेश्च शशिनं स्याद्धस्तकर्मोऽहनि ॥ ६ ॥

द्युनिशं सिताच्छानिं विशोध्य लग्नयुक् उद्वाहः २६ भूसुतात्सितं विशोध्य अहोरात्रं श्रद्धा स्यात् २७ सुरेज्याच्छानिं विशोध्य लग्नयुक् दिवा शास्त्रं रात्रौ विलोमम् २८ गुरोः पुण्यं विशोध्य बुधयुक्तम् आह्नि बलं रात्रौ विलोमम् २२ वपुरेवमेव ३० भौमाद्बुधं विशोध्य नित्यं लग्नयुक् व्यापारसहमम् ३१ चंद्राच्छानिं विशोध्य दिवा लग्नयुक् हस्तकर्म रात्रौ विलोमम् ३२ ॥ ६ ॥

भोग्याद्भुक्तममूनि यावदखिलान्यंतर्भयुक्तान्यतो लग्ने बाह्यगतेऽस्य भुक्तसहितं भोग्योनमंतस्थिते ॥ कृत्वा राशिमपासिते खदहनैर्लग्नाद्वितीयाच्च तत्पुण्याद्यानि भवंति तत्र सहमान्यंशे विरामो यतः ॥ ७ ॥

इति कुमा॰द्वात्रिंशत्सहमाधिकारश्चतुर्थः ॥ ४ ॥

अथ सहमेषु विशेषसंस्कारमाह । पंचम्यंतस्य भोग्यात् द्वितीयांतस्य भुक्तं यावत् पंचम्यंतभोग्यांशाः मध्ये राशयः द्वितीयांतस्य भुक्तांशाः संति एषा योगः पंचम्यंतद्वितीयां_ तयोर्वोध्यगते लग्ने लग्नस्य भुक्तांशाः योगे योज्याः मध्यस्थिते लग्ने लग्नस्य भोग्यांशाः यागा वोध्याः तान् सकलान् योगेन सिद्धान् त्रिंशता विभज्य लब्धं राशयो लग्नाद्भवंति प्रथमपक्षे यदाह समरसिंहः। 'दिवसे दिनपातिभोग्यान् शशिभुक्तानंशकाश्च समीक्ष्य ॥ अंतस्थितराशियुतास्त्रिंशता सहैकतः कृत्वा ॥१॥ यद्यंतत्यान्तपतं (?) न भवति लग्नं तदास्य भुक्तांशाः ॥ मध्ये क्षेप्या मध्यस्थिते तु भोग्यांशकाः पात्याः॥२॥ लग्नाद्वितीयभवनाद्यत्रिंशत्प्रत्येकस्तोऽधिको यत्र ॥ विश्राम्यति यत्रर्क्षे विज्ञेयं पुण्यसहममिति ॥३॥' द्वितीयपक्षे द्वितीयाद्गण्यमाने यस्य राशेः अंते विरामस्तस्य मेषादिगणनया या या संख्या सा अवशिष्टस्य अंशादिकस्योपरि स्थाप्या एवं राश्यादीनि सहमानि स्युः॥७॥

इति कर्मप्रकाशिकायां चतुर्थोऽधिकारः ॥ ४ ॥

## अथ निषेकाधिकारः ।

**विज्ञायते ज्ञानिभिरत्र पुंसां शुभाशुभं जन्मफलं विलग्नात् ॥ तदुच्यते ताजिकनायकोक्ता निषेककालादिह तस्य शुद्धिः ॥ १ ॥**

अथ निषेकाधिकारो व्याख्यायते । विज्ञायते इति । ज्ञानिभिः लग्नात्पुरुषाणां शुभाशुभं जन्मफलं ज्ञायते तस्मात्

कारणात् तस्य लग्नस्य शुद्धिः ताजिकनायकोक्तयुक्त्या निषेककालात् गर्भस्थितिकालादुच्यते ॥ १ ॥

## लग्नांशगेऽब्जे गुणतारकाणि गजेषुनेत्राणि मदांशगे च ॥ रंध्राध्वनोर्हस्तिगजेक्षणानि दिनानि बालः खलु मातृकुक्षौ ॥ २ ॥

आधानलग्नं यादृशं राश्यादि यस्मिन्नंशे वर्तते तस्मिन्नंशे चंद्रे गुणतारकाणि २७३ दिनानि मातृकुक्षौ तस्य बालकस्य स्थितिः सप्तमभावांशादिना समे चंद्रे गजेषुनेत्राणि दिनानि २५८ मातृकुक्षौ बालकस्य स्थितिः अष्टपंचाशदधिकशतद्वय-दिनपर्यंतं तिष्ठति अष्टमनवमभावाश्रितांशसमे चंद्रे हस्तिगजेक्षणानि अष्टाशीत्यधिकशतद्वय २८८ दिनानि यावन्मातृकुक्षौ स्थितिः ॥ २ ॥

## विनोक्तयोगैरिह भूर्ध्वतोऽधो लग्नाब्जयोश्चांतरभांशराशेः ॥ दिनेशलब्धं दिवसादि शेषं जिनैर्हतं सूर्यहृतं च होरा ॥ ३ ॥

उक्तान्यतमभागगे चंद्रे सति गणितेनोच्यते भूर्ध्वं अधो वा चंद्रः लग्नं अथवाऽब्जः अनयोर्मध्ये ये अंशा राशयश्च तेषां सर्वेषां अंशाः कार्याः अनयोर्योगः कार्यः द्वादशभिर्भक्ते लब्धं दिनादिशेषं द्विगुणितं होरा ॥ ३ ॥

द्विस्थं ततः सर्वमुपैति होरां विधाय तस्मा-
त्तिथिभागलब्धम् ॥ विशोध्य पूर्वादिति वि-
स्फुटाः स्युर्घस्राः सहोरा ध्रुवयोगयोग्याः ॥ ४ ॥

द्विस्थमित्येतेन स्पष्टीकरणमाह । होरासहितं यल्लब्धं तद्द्वि-स्थं स्थानद्वये स्थाप्यं नाम उपेतहोरां सावयवं यत्पूर्वं लब्धं दिनादि तत्स्थानद्वयस्थं कृत्वा द्वितीयस्थानस्थस्य तिथिभागेन नाम पंचदशांशेन यद्दिनादि लभ्यते तत्प्रथमादि शोध्य ते दिवसाः सावयवाः स्पष्टाः ध्रुवयोगयोग्याः स्युः ॥ ४ ॥

रामाद्रिपक्षैरिह पूर्वयोगे खोर्ध्वं च योगाच्च ग-
जेषुदोर्भिः ॥ स्फुटद्युहोरासहितैर्विहीनो दि-
वागणो यः स्फुटचन्द्रमाः स्यात् ॥ ५ ॥
तत्तुल्यमध्ये यदि जन्मलग्नं सत्यं ततो वा
विनिषेककाले ॥ लग्नं भवेद्याद्दशमस्य
तुल्यं चले च सम्यग्यवना वदंति ॥ ६ ॥
केश्चिन्मतं जन्मत एव पूर्वं पूर्णाथ दशौ जनि
यत्र राशौ ॥ तस्माद्विशोध्यं भगणक्रमेण
यत्राविशुद्धिः स तु जन्मलग्नम् ॥ ७ ॥

लग्नादग्रे नाम द्वितीयादिराशिषट्के यदा चंद्रस्तदा लग्नो न चंद्रभागेभ्यः इदं कर्म कृत्वा यानि स्पष्टानि ध्रुवयोग्यानि

दिनानि स्युस्तानि स्थाप्यानि लग्नाद्दृष्टितः वा पूर्वतः द्वादशादिषु षट्सु स्थितेंदौ सप्तमचंद्रांतरांशेभ्यः स्पष्टानि दिनानि साध्यानि तैर्दिवसैः स्फुटैः सावयवैः लग्नादधः स्थिते चंद्रे चेदधिकेंदौ रामाद्रिपक्षादिने २७३ शोध्याः अथ च सप्तमादग्रे अष्टमभावात् पूर्वं यदा चंद्रस्तदा लग्नचंद्रांतरांशाः राशिपड्कांशहीनाः कार्याः यच्छेषं त्र्यंशादि तावन्मितं दिनादि गजेषुदोर्मितेषु २५८ दिनेषु योज्यं गर्भस्थितिदिनानि भवंति यदा अष्टमभावादग्रे नवमभावपर्यंतं चंद्रस्तदा तत्संस्कारो न कर्त्तव्यः अष्टादशादिनाधिकनवमासपर्यंतं जंतोर्गर्भस्थितिः पुनर्नवमभावादग्रे खाधरेखोर्द्ध्वं च एवं सप्तमचंद्रांतरलब्धैः स्फुटैर्दिनैर्युतानि गजेषुनेत्राणि २५८ मितानि दिनानि गर्भस्थितियोग्यानि आधानलग्नानीत्यर्थः । स्फुटद्युहोरेति निषेककालेति निषेककाले राश्यादिर्यः स्फुटश्चंद्रस्तत्तुल्यं चेज्जन्मलग्नं तदा शुद्धम् । निषेककाले यद्राश्यादिलग्नं तावज्जन्म निश्चंद्रे तदा शुद्धम् । अथैतद्गणितेन साध्यते यदि निषेककालो ज्ञातस्तदा यथोक्तमेव । यदा निषेककालो न ज्ञायते जन्मकालो ज्ञातोऽस्ति तदा जन्मकालिकस्फुटं चंद्रनिषेकलग्नं प्रकल्प्य जन्मकालिकलग्नं निषेककालिकं चंद्रं प्रकल्प्य पूर्वोक्तवद्गर्भस्थितिदिनानि साध्यानि एवं प्रकारद्वयं जातम् । पूर्वप्रकारे आधानकालिकेऽहर्गणे स्फुटगर्भस्थितिदिनादिना सहितेऽगस्थिते जन्मकालिकोऽहर्गणो भवति तस्मात्स्पष्टचंद्रः साध्यः स चेन्निषेकतुल्यः स्यात्तदा जन्मलग्नं शुद्धम् । द्वितीयप्रकारे स्फुटगर्भस्थितिदिनादिना रहिते

जन्मकालिकोऽहर्गणो निषेककालिकोऽहर्गणो भवति तस्मात् स्फुटश्चंद्रः साध्यः तत्तुल्यं यदि लग्नं तदा शुद्धो जन्मकालः शुद्धो निषेककालश्च अन्यथा सांतरः तस्य अंतरस्य निरासार्थं निषेककालोऽग्रे पृष्ठतो वा तथा चालनीयः यथा निषेककालिकलग्नतुल्यो जन्मचंद्रः निषेकचंद्रतुल्यं जन्मलग्नं स्यात् तदा स्पष्टता जन्मतः पूर्वं यस्य पर्वणः अंते तत्काले यल्लग्नं सपूर्णिमायाः दर्शस्य वा अंतेतरयोंऽशास्तस्य ये पंचाधिकारिणस्तेषां मध्ये योऽधिकबलस्तस्य राशोनपास्य यदंशादि तत्तुल्यं लग्नं दशमं वा स्यात्तदा जन्मकालः शुद्धः इदमेव भगणभ्रमेण शोधनम् ॥ ५ ॥ ६ ॥ ७ ॥

आधानलग्नमपि पूर्वमवेक्ष्य सम्यक्
तत्कालखेचरयुतं सुधिया समुह्यम् ॥
तन्वादिभावफलमत्र च वक्ष्यमाणं
जन्मोक्ततुल्यमथ निश्चयमस्य कुर्यात् ॥ ८ ॥

इति कुमारसिंहात्मजसमरसिंहसमुद्धृते ताजिकतंत्रसारे कर्मप्रकाशिकापरनाम्नि मनुष्यजातके निषेककालाधिकारः पंचमः ॥ ५ ॥

एवमनुना प्रकारेण आधानलग्नं निश्चित्य आधानकालेऽपि ग्रहान् प्रसाध्य जन्मोक्तफलवत्सर्वं फलं विचारणीयम् उदाहरणं रोमकेन जन्मलग्नचंद्रांतरेण भागा एते द्वादशभिर्भागे गृहीते शेषं चतुर्विंशतिभिः संगुण्य द्वादश १२ भिर्भागेलब्धं दिन १०

मुहूर्त १४ एतान् दिनमुहूर्ता १४ श्चतुर्विंशतिभिः संगुण्य सर्वहोराः द्विघ्नः २५४ पंचदशभिर्भागे लब्धं १६ । ५६ एते सर्वहोरा पात्याः २८२।५।२३।२२।२०।२।३७।४ चतुर्विंशतितष्टं दिन ९ होरा २१ मुहूर्ता ४ एतानि दिनानि २७३ संभवंति २१।४।२१।१५।०।४।६।१६।४।१।१।१४।१। एते चंद्रजन्मकालिका त्याज्याः शेषं च स्फुटः मातृकुक्षौ चेत् कालं बाले आसीदेतत् दिनमुहूर्त्ता अहर्गणा त्याज्याः शेषेण स्पष्टचंद्रं गणयेत् यादृशश्चंद्रस्तादृशं लग्नं यद्यागच्छति तदा सत्यमथ तेषां दिनासक्तचंद्रं मेलयित्वा जन्मकालांत्यात्याज्यशेषं माद्यलग्नं भवति । अन्येषां पुनरेवं मतं जातकाम्रो पूर्णिमावास्याश्रताद्वृता तस्यैव तुल्यभागैर्लग्नं साधयेत् । जन्माहर्गणो १३ । ५५३ दिन २८२ मुहूर्त्त २१ पात्यं शेषमहर्गणः ,१३४२७० मुहूर्त्तः ३ एभिश्चंद्रो भवति मुहूर्त्तघटिकां कृत्वा उत्क्रमो लिख्यते २२ । ३७ आ ७ । ७ । ३७ चंद्र ५ । ५ । ४६ आ ५ । १० मू ५ पूर्वाचार्यैश्चतुःप्रकारं जीवेतिनिर्णयितुमायुर्दाय उत्तमो मध्यमो ज्ञातव्यः ॥ ८ ॥

इति कर्मप्रकाशिकावृत्तौ निषेकाध्यायः ॥ ५ ॥

---

## अथ अरिष्टाधिकारः ।

किं जातमात्रस्य भवेद्विनाशो बाल्ये च किं द्रक्ष्यति यौवने च ॥ किं वा चिरायुर्भवितायमित्थमायुश्चतुर्धा प्रथमं परीक्ष्यम् ॥१॥

अथ अरिष्टविकारो व्याख्यायते । जन्मसमये किं तावद्वीक्ष्यमित्याह किं जातमात्रस्येति । इत्थं वक्ष्यमाणप्रकारेण तावदायुः परीक्ष्यं न तु भाग्यादिकम् । सति तस्मिन् तत्संभवादित्यर्थः । तच्चतुर्धा तल्लक्षणं बाल्ययौवनवार्द्धक्यभेदात् ॥ १ ॥

लग्नेशलग्ने गतपूर्णदर्शभागे रवीन्दुसहमेस्तदीशैः ॥ अष्टौ त्रिकेशाश्च गवेषणीयाः सर्वत्र संजीवितनिर्णयाय ॥ २ ॥

तत्र तावत्सद्योऽरिष्टयोगमाह लग्नेशलग्नेति । सर्वत्र चतुःप्रकारादरिष्टे च सति संजीवितनिर्णयाय लग्नं १ यत्तदीशः २ गतपर्वांतलग्नं ३ तदीशः ४ पुण्यसहमं तदीशः यदि दिवा जन्म तदार्कः निशि इंदुः तद्राशीशाः एषां मेषादिचतुस्त्रैराशिकेश्वराः रविसितार्किभृगवोऽह्नि इति त्रैराशिकेशाश्च गवेषणीयाः ॥ २ ॥

एतैर्विनष्टैः सहसा विनाशः पापैर्बलिष्ठैश्च विशेषतः स्यात् ॥ चन्द्रे चतुर्थेऽस्तमिते सपापे दृग्धेषु सर्वेष्वपि हृद्गेषु ॥ ३ ॥

तत्र प्रकारमाह एतैर्विनष्टैरिति । विनष्टलक्षणं यथा 'क्रूराक्रांतः क्रूरयुतः क्रूरदृष्टश्च यो ग्रहः ॥ विरश्मितां मयश्च स विनष्टो बुधैः स्मृतः ॥' तत्र विशेषमाह पापैर्बलिष्ठैरिति । सहसा तल्लक्षणमेव योगांतरमाह चंद्रे चतुर्थ इति । अस्तमिते रवि-

रश्मिप्रविष्टे सपापे पापाक्रांते एवंविधे चंद्रे लग्नचतुर्थे सहसा विनाश इत्यनुवर्त्तते । योगांतरमाह दग्धेष्विति । लग्नलग्न इत्यादिना ये दृक्पास्तेषु सर्वेषु दग्धेषु । दग्धलक्षणं यथा 'यः क्रूरेण युतेक्षितश्च गतरश्मिः स्याद्विनष्टः स हि क्रूराक्रांत इतीष्यतेऽतिकगतः क्रूरेण यो जीयते । यः क्रूरेक्षितमंशमाश्रयति सक्रूरान्वितः कथ्यते यः क्रूरेण विलोकितोऽखिलदृशा क्रूरेक्षितोऽसौ मतः ॥' इति । दग्धलक्षम् । 'सह साकं पतति च सति सहसा विनाशः ।' विरश्मिलक्षणम् । 'यो भानोर्भुवनं गते जिगमिषुर्वासौ विरश्मिर्मतः ।' इति ॥ ३ ॥

त्रैराशिकेशे शशिनो रवेश्च क्रूरार्दिते क्रूरकृतेत्थशाले ॥ दग्धे विनष्टे नवमेश्वरे च क्रूरद्वयाक्रांतिभृतोस्तयोश्च ॥ ४ ॥

योगांतरमाह त्रैराशिके इति । प्रागुक्तानां त्रैराशिकेशे द्रेष्काणेशे क्रूरार्दिते क्रूरयुतेक्षिते क्रूरकृतेत्थशाले विनाश इत्यर्थः । योगांतरमाह शशिन इति । ईश इत्यनुवर्तते निशि जन्मनि शशिनो राशीशे दिवा जन्मनि रवेः राशीशे च क्रूरार्दिते सति सहसा विनाशः । योगांतरमाह दग्ध इति । प्रागुक्तायानां नवमेश्वरनवांशेशौ दग्धौ विनष्टौ वसतः सहसा विनाशः । योगांतरमाह क्रूरद्वयेति । तयोः रोमकोक्तनवमेशयोरपि क्रूरद्वयाक्रांतिभृतोः क्रूरद्वयस्य आक्रांतिः आक्रमणं बिभ्रतः तादृशयोः सतोः सहसा विनाशः ॥ ४ ॥

**सर्वै रिपुद्वादशगैरदृष्टैर्लग्नस्य पत्या पतितैश्च सौम्यैः ॥ चन्द्रे सपापे पतितेऽथ लग्ने नभोगयोगे च भवेद्विनाशः ॥ ५ ॥**

योगांतरमाह सर्वैरिति । प्रागुक्तलग्नादिपैः सर्वैः रिपुद्वादशगैः लग्नात् व्ययगैः तथा लग्नाधिपत्या अदृष्टैः लग्नेशेनेक्षितैः सहसा विनाशः । योगांतरमाह पतितैरिति । सौम्यैः पतितैः अशोभनैः षष्ठाष्टमद्वादशस्थानस्थैः सहसा विनाशः । योगांतरमाह अथेति । सपापे चंद्रे लग्ने अथवा नभोगयोगे नभो दशमं तद्गतो यः पापचंद्रयोर्योगः तदापि सहसा विनाशः॥५॥

**लग्नेऽथ तस्यांतरगैरसौम्यैः सक्रूरकेन्द्रे शशिनीक्षिते च ॥ खे भौमविध्वोर्मृतजन्म वाच्यं लग्ने शनौ तद्विपरीतके वा ॥ ६ ॥**

योगांतरमाह लग्न इति । असौम्यैर्लग्ने विद्यमानैः अथवा तदंतरगतैस्तस्य लग्नस्यांतराणि हद्दाद्रेष्काणमुसल्लहानि तद्गतैः सहसा विनाशः । योगांतरमाह सक्रूरकेंद्र इति । शशिनि सक्रूरकेंद्रे असौम्यैः ईक्षिते च सहसा विनाशः । योगांतरमाह ख इति । खे लग्नाद्दशमे भौमविध्वोः चंद्रभौमयोः सतोः गर्भे मृतिस्थः मंदखंडप्रकारेण जन्मवाच्यमित्यर्थः । योगांतरमाह लग्नेति । शनौ लग्ने सति मृतजन्मवाच्यम् । वा अथवा तस्य लग्नस्य विपरीतं सप्तमस्थाने तद्गते

वा शनौ मृतजन्मवाच्यम् । गुरुसितदृष्टेन इति सद्योरिष्टयोगाः ॥ ६ ॥

### केश्चिद्बलिष्ठैर्बहुभिर्विनष्टैस्त्रैराशिकस्वामिभिरल्पमायुः ॥ चंद्रार्कयोर्लग्नगयोर्द्वयोर्वा सभौमयोर्वार्कितदंतरिंदौ ॥ ७ ॥

अथाल्पायुर्योग माह केश्चिदिति । प्रागुक्तानां ये त्रैराशिकेशास्तन्मध्ये केश्चिदल्पैर्बलिष्ठैर्बहुभिर्विनष्टैः अल्पायुर्भवति । योगांतरमाह चंद्रार्कयोरिति । चंद्रार्कयोर्द्वयोर्वा सभौमयोर्लग्नगयोरल्पायुः । योगांतरमाह अर्केति । अर्केण द्वादशभागेन तस्य अर्कस्य अंतर्मध्ये इंदौ अल्पायुः ॥ ७ ॥

### चन्द्रे खमस्योपरिगे शनेश्च त्रैराशिके तद्युति चाशुभर्क्षे ॥ क्रोडार्कयुक्तेऽस्तगृहे त्रिषष्ठमवेक्ष्यमाणे विचिरं न जीवेत् ॥ ८ ॥

योगांतरमाह चंद्र इति । चंद्रे खर्योपरिगे निःसृते शनेस्त्रैराशिके द्रेष्काणे विद्यमाने जातोऽल्पायुः । योगांतरमाह तद्युतीति । तेन शनिना युति युक्तं अशुभर्क्षे नीचादिदुष्टस्थानगे चंद्रेऽल्पायुः । योगांतरमाह क्रोडेति । शन्यर्काभ्यां युक्ते अस्तगृहे लग्नात्सप्तमस्थानस्थिते एतादृशे चंद्रे स्वदीप्तभागैः त्रिषष्ठं स्ववेक्ष्यमाणे ईक्ष्यमाणे चिरं न जीवेत् ॥ ८ ॥

**लग्ने कुजे क्रोडयुतेऽन्त्यषष्ठरंध्रस्थिते तद्गृहगेंदुरव्योः ॥ राकापतौ क्रूरदृशोभयेऽपि तस्यां च दर्शे च तनौ न जीवेत् ॥ ९ ॥**

योगांतरमाह लग्ने इति । लग्ने कुजक्रोडयुते शनिभौमयुते अंत्य १२ षष्ठ ६ रंध्र ८ स्थिते तद्गृहगयोः इंदुरव्योः चंद्रार्कयोः स्वल्पं जीवति । योगांतरमाह राकेति । राकापतौ पूर्णिमांतलग्नेशौ क्रूराणां पापग्रहाणां सममसमदृष्टिसहिते महार्थतया चिरं जीवेत् । योगांतरमाह उभय इति । उभयं द्वितयस्थानं च क्रूरदृशा सहितं चेत्तदा स्वल्पं जीवति लग्नादष्टमस्थैः पापग्रहैरयं योगः फलितोऽर्थः । योगांतरमाह तस्यामिति । तस्यां राकायां अंतःतनौ पूर्णिमांतलग्ने क्रूरदृशा सहिते चिरं न जीवेत् । योगांतरमाह दर्शेति । अमावास्यायां अंतस्तनौ क्रूरदृशा सहिते चिरं न जीवेत् ॥ ९ ॥

**एकांशगार्किक्षुतदृक्समभानुचन्द्रेऽजगे वा कुजशत्रुदृष्ट्या ॥ विलग्नपुण्येन्दुरवीश्वरेषु सूर्यांशगेषु म्रियते न दीर्घम् ॥ १० ॥**

योगांतरमाह एकांशगेति । एकांशगेनार्किणाः शनेः क्षुतदृशा च सहिते सभानुचंद्रे चिरं न जीवेत् । योगांतरमाह अजग इति । चंद्रे अजगे मेषस्थे भौमसमदृष्ट्या सहिते चिरं न जीवेत् । योगांतरमाह । विलग्नेशः पुण्यसद्मे दिवा जन्मनि

रविराशीशः रात्रौ चंद्रराशीशः एषु अस्तमितेषु दीर्घं न म्रियते म्रियते स्वल्पं जीवतीत्यर्थः ॥ १० ॥

**क्रूरद्वये तुर्यगते तदंतः क्षीणे विधौ द्यूनगतैश्च पापैः ॥ दृष्टेऽरिदृष्ट्याथ च केन्द्रपापहृद्यास्थिते जीवति नैव जातः ॥ ११ ॥**

योगांतरमाह क्रूरद्वय इति । क्रूरद्वये शनिभौमे तुर्यगते लग्नाच्चतुर्थस्थे तदा न जीवेत्स्वल्पं जीवतीत्यर्थः । योगांतरमाह तदंतरिति । तदंतः शनिभौमयोरंतर्मध्ये क्षीणे विधौ चिरं न जीवेत् । योगांतरमाह द्यूनगतैरिति । द्यूनगतैः सप्तमस्थैः पापैररिदृष्ट्या दृष्टे चंद्रे स्वल्पायुः । योगांतरमाह अथेति । केंद्रपापहृद्यास्थिते केंद्रस्थितस्य पापस्य हृद्यास्थिते चंद्रे जातो नैव जीवति ॥ ११ ॥

## अथारिष्टभंगः ।

**शुभे शनौ लग्ननवांशनाथाः केन्द्रास्थिता जीवति नाऽबलिष्ठाः ॥ षष्ठेऽस्तगे षष्ठगलग्नपेऽस्ते पापेषु लग्नेऽपि स्वशत्रुगेन्दौ ॥ १२ ॥**

अथारिष्टभंगमाह । शुभे ईक्षाले पूर्वं शुभः इति प्रागुक्तं कृत्वा शनौ सति एकः प्रसिद्धः द्वौ रोमकोक्तावेवं त्रयोऽपि लग्ननवांशनाथाः केंद्रस्थिताश्चेद्भवंति तदा जीवति। कीदृशाः नाबलिष्ठाः न अबलिष्ठाः किंतु बलिष्ठा इत्यर्थः । निरनुबंध-

त्वाद्नादेशाभावः नैकधेत्यादिवत् । पुनरप्यरिष्टयोगांतरमाह पष्ठ इति । अस्तगे अस्तमिते लग्नेशे पष्ठगे लग्नात्पष्ठस्थिते वा लग्नयोर्वारिष्टमित्यर्थः । योगांतरमाह अस्त इति । अस्ते सप्तमे नवमे वा पापेषु सत्सु चंद्रे स्वशत्रुगे च सति लग्नात्षष्ठे दशमे च तर्हि जीवति ॥ १२ ॥

सौम्योपरिष्टाच्च रवेरसौम्याः क्षिपंति तेजस्त-
दुपैति नाशम् ॥ क्रूरोपरिष्टात्पतिते शुभानां
तेजस्यसौ जीवति वर्द्धते च ॥ १३ ॥

योगांतरमाह सौम्य इति । असौम्याः रवेर्द्वादशभागाः सौम्योपरिष्टात्तेजः स्वदीप्तिमार्ग क्षिपंति यदा नाशं उपैति एतद्वैपरीत्येन शुभानां तेजसि प्राग्युक्तप्रकारेण क्रूरोपरिष्टात् क्रूरोपरि पतिते सदा असौ जातः जीवति वर्द्धते च इदमुक्तम् । सौम्यात् क्रूरे मूसरिफे त्वरिष्टम् । क्रूरात्सौम्ये मूसरिफे अरिष्टभंग इति ॥ १३ ॥

मार्तण्डसूनावुदयाभिलाषिण्यब्जे धराधोऽ-
स्तमिते च मृत्युः ॥ त्रैराशिकेशे पतिते च
मूर्तेस्तदूर्ध्वमुद्रात्यशुभे च तेजः ॥ १४ ॥

पुनरिष्टयोगमाह मार्तंडेति । मार्तंडसूनौ शनौ उदयाभिलाषिणि लग्नाद्द्वादशस्थे तथा अब्जे चंद्रे धराधः लग्नात्पंचमे अस्तमिते च सति स्वल्पं जीवति । अभिलाषिणीत्यनेनामार्ग-

गामित्वं सूचितम् । योगांतरमाह त्रैराशिकेश इति । मूर्तेर्लग्नस्य त्रैराशिके पतिते षडष्टव्ययगे तथा अशुभे पापे तदूर्ध्वं लग्नोपरि तेजः स्वदीप्तिभागं उद्गाति सजाति सति स्वल्पं जीवति ॥ १४ ॥

विनाशिते शीतरुचावसौम्यैर्निरायुषो निश्चयमत्र कुर्यात् ॥ न द्वादशाब्दानिह बभ्रमीति समग्रभावाननुवर्षमिन्दुः ॥ १५ ॥

अथ चंद्रारिष्टे विशेषमाह विनाशित इति । शीतरुचौ चंद्रे असौम्यैः पापैर्विनाशिते निरायुषः पुरुषस्य निश्चयं जीवननिर्णयं न कुर्यात् । कियत्कालमित्याह न द्वादशाब्दानीति यावद्द्वादशाब्दं पूर्ण स्यादित्यर्थः । कालाध्वनोर्नैरंतर्ये द्वितीया । तर्हि किं कुर्यादित्याह बभ्रमीति । इहास्मिन् योगे अनुवर्षं प्रतिवर्षं इंदुः समग्रभावान् यथा बभ्रमीति तथा वक्ष्यमाणेन प्रकारेण भ्रामयेदित्यर्थः । इदमुक्तं तस्मिन् काले विनष्टं चंद्रं भ्रामयेत् यत्राब्दे विनष्टः स्यात्तत्राब्दे रिष्टमिति ॥ १५ ॥

लग्नाद्दकाणाश्च पुरा परीक्ष्याः शिशोररिष्टस्फुटनिश्चयाय ॥ अथायुषो निश्चिनुयात्प्रमाणं न्यूनाधिकं खेटबलाद्यथोक्तम् ॥ १६ ॥

अथ द्रेष्काणारिष्टमाह लग्नेति । शिशोः अरिष्टस्फुटनिश्चयाय लग्नद्रेष्काणाः प्रथमं परीक्ष्याः । अथारिष्टविचारानंतरं आयुषः

प्रमाणं निश्चिनुयात् निर्णयेत् । कीदृशं खेटबलानुमानात् न्यूनाधिकं यथोक्तं यादृशं उक्तमित्यर्थः ॥ १६ ॥

आद्ये दृकाणे व्रणरुक् द्वितीये वृषस्य पूर्वे पिटकाः कटौ रुक् ॥ द्वितीयके मृत्युसमं च मांद्यं स्यात्पंचमे मासि गदस्तृतीये ॥ १७ ॥

अथ मेषस्य द्वितीयतृतीययोः वृषस्य प्रथमद्वितीययोर्द्रेष्काणयोः फलमाह—आद्येति । आद्ये मेषस्य द्वितीये द्रेष्काणे जातस्य व्रणरुग्भवति । अथ वृषस्य प्रथमद्रेष्काणे जातस्य पिटकाः शीतलाद्युपदंशाः कटौ रुक् च भवति । द्वितीये मृत्युसमं मांद्यम् । तृतीये मेषस्यैव तृतीयद्रेष्काणे पंचमे मासि गदः स्यात् ॥ १७ ॥

युजो धुरि प्राक् फलमेव सार्द्धमब्दं द्वितीये सदलत्रयाब्दम् ॥ सप्तानि वर्षाणि रुजश्च खर्जूरंत्ये गदोऽब्दं चतुरब्दके भीः ॥ १८ ॥

अथ मिथुनद्रेष्काणफलमाह—युज इति । युजो मिथुनस्य धुरि प्रथमे द्रेष्काणे सार्द्धमब्दं यावत् प्राक् फलमेव पंचमे मासि गद इत्यर्थः । द्वितीये सदलत्रयं सार्द्धत्रिवर्षं गदः । सप्त वर्षाणि यावत् वातरुजः खर्जूश्च भवति । अंत्ये तृतीये प्रथमवर्षं यावद्गदः चतुरब्दके चतुर्थे वर्षे भीतिश्च ॥ १८ ॥

कर्के गदोऽब्दात्प्रथमे षडब्दं मध्ये शरत्सप्त-

कतोऽल्परोगः ॥ हरेश्च पूर्वेऽर्द्धर्त्तौ व्रणा-
दिबाधा द्वितीये ऋतुसप्तकं च ॥ १९ ॥

अथ कर्कप्रथमद्वितीययोः फलमाह । कर्के प्रथमे द्रेष्काणे अब्दात् प्रथमवर्षमारभ्य ल्यप्लोपे पंचमी । षडब्दं यावद्गदः मध्ये द्वितीये शरत्सप्तकतः सप्तभिर्वर्षैः हेतौ पंचमी । अल्परोगी भवति । अथ सिंहस्य प्रथमद्वितीययोः फलमाह—हरेरिति । हरेः सिंहस्य पूर्वे प्रथमद्रेष्काणे अर्धर्तौः षड्भिर्मासैः व्रणादिबाधा । द्वितीये ऋतुसप्तकं सप्तवर्षपर्यंत व्रणादिबाधा ॥ १९ ॥

आद्ये तुलाया द्व्यदुग्धपायी मासत्रये शूल-
मथ त्रिमासैः ॥ नाशः शिशोर्द्व्यर्धशरच्च
सार्द्धमन्दद्वयांते खलु जीविताशा ॥ २० ॥

अथ तुलाप्रथमद्रेष्काणफलमाह—आद्येति । तुलायाः आद्ये द्रेष्काणे द्व्यदुग्धपायी द्वयोजननीधात्र्योर्दुग्धपायी, तथा मासत्रिके शूलं अथवा नवमे मासे शूलमित्यर्थः । तथा शिशोः व्यर्द्धशरत्सार्द्धद्विवर्षमध्ये नाशः, सार्द्धद्विवर्षानंतरं जीविताशा भवतीत्यर्थः ॥ २० ॥

अलेश्च पूर्वे ऋतुपंचकं रुक् चापे विपत्तत्त्व-
दिनानि पूर्वे ॥ सपंक्तिमासाब्दकमेव जीवे-
न्मध्येऽर्कवर्षैः परतोऽब्धिमासैः ॥ २१ ॥

अथ वृश्चिकप्रथमद्रेष्काणफलमाह—अलेरिति । अलेः वृश्चिकस्य पूर्वे प्रथमे द्रेष्काणे ऋतुपंचकं पंचवर्षाणि यावत् रुक् रोगः। अथ धनुर्द्रेष्काणफलमाह—चाप इति । चापे धनुषि पूर्वे प्रथमे द्रेष्काणे ऋतुपंचकं पंचवर्षाणि यावत् रुक् रोगः । पंचविंशतिदिनानि विपत् तथा सपंक्तिमासाब्दकमेव दशमाससहितं वर्षमेव जीवेत् । मध्ये द्वितीये अर्कवर्षैर्द्वादशवर्षैर्विपत् अपरे तृतीये अब्धिमासैश्चतुर्भिर्मासैर्विपत् ॥ २१ ॥

मृगस्य पूर्वे च सकष्टवृद्धिं मध्ये द्विवर्षे मरणस्य भीतिः ॥ अंत्ये दृकाणे पितरौ म्रियेते सौम्या यदि स्युः स्वबलेन हीनाः ॥२२॥

अथ मकरद्रेष्काणफलमाह । मृगस्य पूर्वे प्रथमे द्रेष्काणे सकष्टवृद्धिः कष्टेन वर्द्धते इत्यर्थः । मध्ये द्वितीये द्विवर्षे वर्षद्वयपर्यंतं मरणस्य भीतिः अंते तृतीये द्रेष्काणे पितरौ मातापितरौ म्रियेते । अथ सर्वापिण्मंगमाह—सौम्या इति । सौम्याः शुभग्रहाः स्वबलेन केंद्रादिस्थानबलेन यदि हीनाः स्युस्तदारिष्टं नान्यथेत्यर्थः ॥ २२ ॥

रुक् पंक्तिमासान्प्रथमे घटस्य मध्येऽङ्कसंख्याश्च पितृप्रकोपौ ॥ सप्ताब्दकं रोगहतस्तृतीये नोक्तानि कन्याझपयोः फलानि ॥२३ ॥

अथ कुंभद्रेष्काणफलमाह—रुगिति । घटस्य कुंभस्य प्रथमे द्रेष्काणे पंक्तिमासान् दशमासपर्यंतं रुक् रोगः । मध्ये द्वितीये

अंगसंख्याः षण्मासाः यावता येन प्रकोपी पितुर्दुःखदः । तृतीये सप्ताब्दकं सप्तवर्षपर्यंतं रोगहतः रोगात्पीडितः । कन्याझषयोः फलानि नोक्तानि अनभिधानादित्यर्थः । आरिष्टमावत्वात् ॥ २३ ॥

**त्रीन्वासरान् खाब्धिमितान्यहानि क्रमाच्छशीक्ष्यः स्फुटनिश्चयाय ॥ त्र्यहे मिलंति ग्रहधातवो हि जंतोस्तदा स्तन्यरसं स वेत्ति॥२४॥**

अथ वृद्धयोगानाह–त्रीनिति । त्रीन् वत्सरांस्त्रिदिवसान् वर्षाण्यहो मरणायेति वक्ष्यमाणत्वात् खाब्धिमितानि चत्वारिंशत्परिमितानि दिनानि यावत् स्फुटस्य प्रफुल्लस्य वर्द्धनस्येति यावत् । स्फुटो प्रफुल्लयोरिति मेदिनीकोशः । निश्चयाय ज्ञानाय चंद्राशिशोः क्रमातृतीयदिवसमारभ्य चत्वारिंशद्दिनपर्यंतं ईक्ष्यः केर्युते ईक्ष्यस्य इति वीक्ष्यम् । त्र्यहे जन्मतस्तृतीये दिने ग्रहधातवः ग्रहाणां धातवः स्वभावा जंतोर्जायमानस्य मिलंति ततः स जंतुस्तन्यरसं दुग्धरसं स्वादु वेत्ति जानाति न तत्प्रागित्यर्थः ॥ २४ ॥

**सप्तद्युभिश्चक्रचतुर्थभागं भुनक्ति शीतांशुरतोऽस्य दार्ढ्यम् ॥ दोषान्गुणान्प्रत्यबलं स्फुटं च तल्लंघनाज्जातकजीविताशा ॥२५॥**

अथ दार्ढ्यनियममाह–सप्तद्युभिरिति । सप्तद्युभिः अस्य जंतोः दार्ढ्यं स्यात् । अत्र हेतुमाह–चक्रेति । यतः शीतांशुः

सप्तदिनैः चक्रचतुर्थभागानामंतिमभागं भचक्रस्य चतुर्थांशं भुनक्ति इत्यतो हेतोरित्यर्थः । तथा सप्तघुभिः स्तनसंबंधिनः दोषान् गुणांश्च प्रतिक्रमेण अबलं कार्श्यं स्फुटत्वं मफुल्लत्वं च जानाति । तस्य सप्तदिनस्य लंघनाज्जातकस्य जातस्य जीविताशा स्यात् ॥ २५ ॥

स्वांभोधिसंख्ये द्युगणे समग्रधातूकरस्त-
न्यधरस्ततोऽसौ ॥ जानाति संसारसुखासु-
खानि वर्षाण्यहोभिर्गणयेत्रिकेऽपि ॥ २६ ॥

स्वांभोधीति । स्वांभोधि ४० संख्ये द्युगणेऽहर्गणे संज्ञात्तसमग्रधातूनां उक्तदोषत्वात्तादृशस्तन्यधरश्च स्यात् । ततः असौ जातः संसारसुखासुखं जानाति । वर्षत्रिकेऽपि अहोभिः एव वर्षाणि गणयेत् ॥ २६ ॥

पूर्वे त्र्यहे केन्द्रविनिर्गतेऽब्जे शुभैरदृष्टेऽप्य-
कृतेत्थशाले ॥ स्तन्याल्पताभीश्च सकष्ट-
वृद्धिः क्रूरान्वितेऽस्मिन् किल लाघवं च ॥२७॥

अथ दुग्धाल्पतादोषमाह–पूर्वे त्र्यह इति । पूर्वे त्र्यहे जन्मदिनात् प्राक् त्र्यहमध्ये कस्मिंश्चिद्दिने अब्जे चंद्रे केंद्राद्विनिर्गते कीदृशेऽशुभैरदृष्टे तथ शुभैरित्थशाले अकृते सति स्तन्याल्पता दुग्धाल्पत्वम् । सभीः सकष्टवृद्धिः कष्टेन वर्धमानश्च स्यात् । अस्मिन् चंद्रे क्रूरान्विते लाघवं शरीरकार्श्यं स्यात् ॥ २७ ॥

पीडार्किभागे तरणौ कुजस्य विलग्नहद्दो-
पारि चारुपंथाः ॥ पुण्ये भुवि क्रूरहतेऽथ कष्टं
वक्रेत्थशाले तनुपुण्यपत्योः ॥ २८ ॥

पीडार्कीति । आर्किभागे शनित्रिंशांशे । त्रिशांशो भागशब्देन पारंपर्यमिदं गुरोरीति परिभाषितत्वात् । तरणौ सूर्ये सति हृद्यौ पीडा स्यात्कष्टेन वर्धते इत्यर्थः । कुजस्य विलग्नहद्दोपारि लग्नसंबंधिहद्दोपारि चारुपंथाः शोभनमार्गश्चेत्तदा विशेषेण पुण्ये पुण्यसहमे भुवि चतुर्थे क्रूरहतेक्षिते च रुग्वृद्धि अथ तनुपुण्यपत्योः लग्नेशपुण्यसहमेशयोः वक्रेत्थशाले वक्रिणा ग्रहेण इत्थशाले कष्टम् ॥ २८ ॥

एकादशे पुण्यसहे तदीशे क्रूराहते क्रूरशशी
सराफे ॥ कष्टं जडत्वं पिटकादिरोगा एवं
त्रिकेऽपि क्रमशो विभाव्यम् ॥ २९ ॥

एकादशेति । एकादशपुण्यसहमेशे लग्नादेकादशे कष्टम् । पुण्यसहमेशे क्रूराहते क्रूरयुतेक्षिते जडत्वम् । क्रूरशशी सराफे चंद्रे क्रूरान्निसृते पिटकाः विस्फोटादिरोगाः । एवं त्रिकेऽपि क्रमशः फलं वाच्यम् ॥ २९ ॥

चन्द्रे सपापेऽपि च पापहद्दे दृष्टयेक्कवालस्य
शुभस्य हीने ॥ मात्रोज्झितो वर्त्मनि जीव-
तीति सूर्ये च पित्रा परपोष्यमेवम् ॥ ३० ॥

अथ येन पितृभ्यां त्यज्यते तद्योगमाह-चंद्रेति । समापे चंद्रे पापयुक्ते इक्कालस्थितस्य शुभस्य दृष्ट्या हीने मात्रा वर्त्मनि उज्झितस्त्यक्तः व्यभिचारजन्यत्वादिति भावः । तथापि परपोष्यापत्यं जीवति । अथवा पापस्य हद्दास्थे शेषं प्राग्वत् । तथाविधे सूर्ये पित्रा त्यज्यते ॥ ३० ॥

द्युजातके द्विस्थविधुं चतुर्थेऽधिकारहीनो-
ऽवनिजोऽर्कदृष्टे ॥ पश्यंस्ततुं त्याजयतीति
मन्दे नक्तं शुभेऽब्जेन शुभेत्थशाले ॥ ३१ ॥

योगांतरमाह-द्युजातकेति । दिवाजन्मनि चतुर्थेऽवनिजो भौमः द्विस्थविधुं द्वितीयस्थं चंद्रं पश्यन् सन् ततुं जातं शरीरं त्याजयति पिता त्यजतीत्यर्थः । कीदृशे चतुर्थे । अर्कदृष्टे अर्कात्सप्तमे दशमे वा सतीत्यर्थः । कीदृशोऽवनिजः अधिकारहीनः स्वगृहेशाद्यधिकारहीनः । योगांतरमाह-मंद इति । नक्तं रात्रौ जन्मनि मंदे शनौ तादृशे भौमसदृशे पिता त्यजतीत्यर्थः । अस्यापवादमाह-शुभ इति । अब्जे चंद्रे शुभे इक्कालादिशुभस्थाने शुभेत्थशाले शुभग्रहेण कृतेत्थशाले न त्यजतीत्यर्थः ॥ ३१ ॥

दिवा दिनेशे निशि सूर्यपुत्रे विनाशिते क्रूर-
युतीक्षणाभ्याम् ॥ भ्रांतिः पितुर्जारभवो
जनन्या चन्द्रेऽह्नि भौमेन यमेन रात्रौ ॥ ३२ ॥

अथ पितृभ्रांतियोगमाह-दिवेति । पितृभ्रांतौ पितृभ्रमे दिवा जन्मनि दिनेशे सूर्ये क्रूरयुतीक्षणाभ्यां विनाशिते सति पितु-

भ्रांतिः कस्माज्जात इति भ्रम इत्यर्थः । तथा निशि रात्रौ जन्मनि सूर्यपुत्रे शनैश्चरे तादृशे जनन्या जारभवो वाच्य इत्यर्थः । योगांतरमाह—चंद्रेति । अह्नि दिवा जन्मनि चंद्रे भौमेन युते तथा रात्रौ चंद्रे यमेन शनिना युतेक्षिते जारभवो वाच्य इत्यर्थः ॥ ३२ ॥

तुर्येश्वरस्तुर्यमिनेश्वरोऽर्कं वीक्षेत पत्युः सहमं तदीशः ॥ शौर्यं प्रजायाः सहमेश्वरश्चेत्तदान्यजातः खलु वेदितव्यः ॥ ३३ ॥

इति कर्मप्रकाशिकायामरिष्टाध्यायः ॥ ६ ॥

योगांतरमाह—तुर्येति । तुर्येश्वरः तुर्यं चतुर्थभवनं तथा इनेश्वरः सूर्यराशीश्वरः अर्कं तथा तदीशः पितृसहमेशः पितृसहमं तथा शौर्यसहमं प्रजायाः सहमेश्वरश्चेद्वीक्षते तदा बालः खल्विति निश्चयेन अन्यजातो वेदितव्यः ॥ ३३ ॥

इति कर्मप्रकाशिकावृत्तावरिष्टाध्यायः ॥ ६ ॥

## अथारिष्टभंगाध्यायः ।

यच्छंति ये चायुरिहार्यमाद्या विभागशस्तानपि वीक्ष्य सम्यक् ॥ आयुःप्रमाणं घनमल्पकं वा कुर्वीत दुर्वीत्यसवाक्यमेतत् ॥ १ ॥

अथारिष्टभंगाध्यायो व्याख्यायते । तत्र दुर्वीत्यमाचार्यमतमाह—यच्छंतीति । अर्यमाद्याः रव्यादयः सूर्योऽर्यमा भग-

स्वष्टेत्यभिधानात् वक्ष्यमाणप्रकारेण विभागशो यत् आयुः-प्रमाणं पठंति तानपि भागान् वीक्ष्य घनमल्पकं चायुःप्रमाणं वदेत् एतद्धुर्वीत्यस्यवाक्यम् ॥ १ ॥

त्रैराशिकेशैरशुभैः शुभैर्वा मिश्रैर्नरो जीवति यौवनांतम् ॥ लग्नत्रिराशीश्वरपुण्यनाथसूर्यैर्विनष्टैः पतितैर्विशेषात् ॥ २ ॥

अथारिष्टभंगदोषमाह—त्रैराशिकेशैरिति । त्रैराशिकेशैः अशुभैः शुभैर्वा अविनष्टैर्नरो यौवनांतं जीवति लग्नत्रिराशीशौ द्रेष्काणेशः पुण्यनाथः पुण्यसहमेशः सूर्यश्च एतैर्विशेषात् विनष्टैरपीति योगे यौवनांतं जीवतीत्यर्थः ॥ २ ॥

लग्ने गुरौ तत्त्रिकगेऽथ केन्द्रे विशुद्धशुक्रस्य दृशा च जीवेत् ॥ केन्द्रे सुतेऽध्वन्यसिते सवीर्ये ह्यिन्द्वोस्तनावीज्यदृशा द्युजन्मा ॥ ३ ॥

योगांतरमाह—लग्न इति । गुरौ लग्न लग्नस्थे तत्त्रिकगे लग्नद्रेष्काणस्थे विशुद्धस्य वक्रास्तादिदोषरहित तस्य शुक्रस्य दृशा सहिते । सहार्थे तृतीया । यौवनांतं जीवेत् । अथवा विशुद्धशुक्रस्य दृशा सहिते गुरौ केंद्रगे यौवनांतं जीवेत् । योगांतरमाह—केंद्र इति । केंद्रे सुते पंचमे अध्वनि नवमे सवीर्ये बलिष्ठे असिते शनावपि ईज्यदृशा सहिते द्युजन्मा सदा जीवेत् । योगांतरमाह—इंद्वोरिति । इंद्वोः बुधचंद्रयोः तनौ ईज्यदृशा सहितयोः जीवेत् ॥ ३ ॥

लग्नेंदुशुद्धौ त्रिकपेषु सत्सु शुद्धेष्वनस्तेश्च-
धिकारवत्सु ॥ जीवत्यवक्रेषु बलोच्चसंस्थ-
ग्रहेत्थशाले शशिनो विशेषात् ॥ ४ ॥

लग्नेंदुशुद्धाविति । लग्नेंद्वोः शुद्धिः क्रूरदृग्योगराहित्यं तस्मिन् सति त्रिकपेषु प्रागुक्तेषु त्रैराशिकेषु शुद्धेषु पापदृग्योगरहितेषु अनस्तेषु अस्तूर्यरश्मिप्रविष्टेषु अधिकारवत्सु स्वगृहोच्चादिस्थितेषु अवक्रेषु वक्ररहितेषु सत्सु जीवति । योगांतरमाह-बलेति । बलिनश्चंद्रस्य बलोच्चसंस्थेन ग्रहेण सहेत्थशालेन विशेषाज्जीवति ॥ ४ ॥

कुजेक्ष्यवर्धिष्णुविधौ सकष्टं दिवाधिकं भूप-
रिगेऽतिभौमे ॥ न वर्धतेऽथाब्जपतौ सपापे
लग्नाधिपे चान्यतरैः शुभैश्च ॥ ५ ॥

अथ कष्टवृद्धियोगमाह-कुजेक्षीति । कुजेक्षितेऽवर्धिष्णुविधौ कुजस्य दृशा वर्धमाने क्षीणे चंद्रे कुजेन दृष्टे सति सकष्टं वर्धते । तत्र विशेषमाह-दिवेति । दिवा जन्मनि प्रागुक्तयोगे अधिकम् । पुनर्विशेषमाह-भूपरिग इति । भूपरिगे द्वित्रिभागे भौमे द्वितीयतृतीयस्थानस्थे अतिकष्टेन वर्धते इत्यर्थः । अथ वर्धनयोगः । न वर्धत इति । अथाधिकन्यूनविशेषमाह । भूपरिगते अब्जपतौ चंद्राराशीशे सपापे लग्नाधिपे च सपापे, अन्यतरैः लग्नराशीशमित्रैः शुभैः पापैश्च दृष्टेन वर्धते कार्श्येन जीवतीत्यर्थः ॥ ५ ॥

लग्नेऽर्कजोर्वीसुतयोर्विशुद्ध्या बलिष्ठयोर्दीर्घ-
मुपैति वृद्धिम् ॥ शुभे शुखेटैरशुभैः शुभैर्वा
लग्नांबरस्थे त्रिकपे सुखे च ॥ ६ ॥

अथ दीर्घवर्धनयोगानाह—लग्नेति । लग्नेऽर्कजोर्वीसुतयोः शनिभौमयोः संबंधिन्या विशुद्ध्या दृग्योगराहित्येन कारणेन दीर्घं जरां वृद्धिं उपैति । कीदृशयोस्तयोः बलिष्ठयोः स्वगृहो-चादिस्थयोः मकरस्थयोरिति यावत् । योगांतरमाह—शुभ इति । शुखेटैः दिनबलिष्ठग्रहैः शुभैरशुभैर्वा शुभे दिवा बलिष्ठराशौ तथा त्रिकपे मागुक्ताष्टमेशराशिकपे लग्नांबरस्थे लग्नदशमस्थेऽथवा सुखे चतुर्थे दीर्घं वर्धते । क्वचित्सुत इत्यपि पाठः ॥ ६ ॥

येऽष्टौ किलायुःप्रसवो मताः प्राक् तैः केन्द्र-
गैश्चाऽपतितैरपापैः ॥ अक्रूरदृग्भिः शुभदृ-
ग्भिरेवमायुःप्रदैः पश्यति पुत्रपौत्रान् ॥ ७ ॥

योगांतरमाह—येऽष्टाविति । अष्टौ लग्नेशलग्नेत्यादयः प्रायुः-प्रदाः प्राङ्मता उक्ताः तैः केंद्रगैः षडष्टव्ययरहितैः अपापैः शोभनैः अक्रूरदृग्भिः क्रूरदृग्रहितैः एवंविधैर्ग्रहैः पुत्रपौत्रान् पश्यति ॥ ७ ॥

केन्द्रेऽथवा तन्निकटेऽर्कविध्वोर्वृद्धो भवत्या-
त्मगृहेऽर्हणीयः ॥ खेऽब्जे शुभे वा भुवि
सद्ग्रहेषु गुरौ स्वहृद्दे शनिहृद्दगेऽर्के ॥ ८ ॥

योगांतरमाह—केंद्रेति । केंद्रेऽथवा तन्निकटे पणफरेऽर्कविध्वोः चंद्रार्कयोस्तादृग्वृद्धो भवति । अथवात्मगृहे स्वीयक्षेत्रे अर्हणीयः पूज्यो भवतीत्यर्थः । योगांतरमाह—खेति । अब्जे चंद्रे खे दशमे वा शुभे वा लग्नगे तदा वृद्धो भवति । योगांतरमाह—भुवि चतुर्थे सद्ग्रहेषु सत्सु वृद्धो भवति । योगांतरमाह—गुरौ स्वदृग्गे वृद्धो भवति । सूर्ये शनिदृग्गे सति योगः ॥ ८ ॥

लग्नेऽथ खेऽर्के शुभदृश्यपापे लग्ने सिते चेज्यदृशा विधौ वा ॥ ज्ञेन्द्वोश्चतुर्थास्तगयो-र्विशुद्धे पुण्ये तदीशेऽथ तनौ चिरायुः ॥ ९ ॥

इति कर्मप्रकाशिकायां जीवननिर्णयः सप्तमः ॥ ७ ॥

योगांतरमाह—लग्नेति । अर्के लग्ने वा खे दशमे शुभदृष्टे पापरहिते चिरायुर्भवति । योगांतरमाह—ईज्यदृशा सहिते सिते बुधे वा तादृशे लग्नस्थे चिरायुः । योगांतरमाह । बुधेंद्वोः क्रमेण चतुर्थास्तगयोश्चिरायुः । विशुद्धेति । पुण्ये पुण्येशे तथा लग्ने विशुद्धे पापदृग्योगरहितो चिरायुः ॥ ९ ॥

इति कर्मप्रकाशिकावृत्तौ अरिष्टभंगाध्यायः ॥ ७ ॥

## अथ शरीराधिकाकारः ।

### अथ वर्णाकृतिः ।

शरीरवर्णाकृतिरात्मचेष्टा गुणा दृकाणाधिपते र्विभाव्याः ॥ यथास्वरूपः स भवेत्तदात्मा जातः किल स्याद्यवनोक्तमेतत् ॥ १ ॥

अथ शरीराधिकारो व्याख्यायते–शरीरेति ॥ तत्र शरीरं तदाकृतितत्प्रकृतिर्द्रेष्काणेन बोध्यम् । द्रेष्काणशाश्च शीतो रूक्ष इति प्रागुक्तत्वात् । तस्य जातस्य शरीरादिकं तत्स्वरूपमित्यर्थः । लग्नवांशकतुल्यतनुः स्यादित्यपरे । तस्माद्दृक्काणाधिपतेर्गुणा विभाव्याः । स यथास्वरूपं जातः तदात्मा भवेत् । एतद्यवनेनोक्तम् ॥ १ ॥

श्यामः स्थूलकपोलदंतवसनघ्राणोऽल्पतारो-
ऽल्पवाग्रम्यश्मश्रुरवाङ्मुखश्चलमतिः क्रुद्धा-
ननः कौतुकी ॥ दीर्घाक्षो जनवत्सलस्तनु-
वपुः सर्वप्रियो नम्रवान् शृंगारी शुभशौरि-
धातुरशुभे तस्मिन्पुरा व्यत्ययात् ॥ २ ॥

किमेतदित्याह । श्यामः श्यामवर्णः । स्थूलकपोलदंतवसनघ्राणः । दंतवसनं ओष्ठः । अल्पे तारके कनीनिके यस्य । अल्पवाक् परिमितवचनः । रम्यश्मश्रुः दृश्यकूर्चः । अवाङ्मुखः अधोमुखः । चलबुद्धिः कोपाविष्टमुखः । कौतुकी कुतूहलासक्तः । दीर्घाक्षः । जनवत्सल । कृशशरीरः । सर्वप्रियः । विनयशीलः । शृंगारी भूषणप्रियः रसिको वा । शुभशौरिधातुः शुभः स्वगृहोच्चादिस्थः शनिः तस्यासौ धातुर्गुणः । तस्मिन् शनौ अशुभगे नीचारिभगे व्यत्ययात्फलं वाच्यम् अश्याम इति ॥ २ ॥

वाग्मी सुजिह्वः परलोकभीरुर्धर्मी सुरार्चा-
प्रवणः प्रियात्मा ॥ औन्नत्यकांक्षी निजदार-
तुष्टो ज्ञानोपदेशी गुरुधातुजः स्यात् ॥ ३ ॥

अथ गुरुस्वरूपमाह—वाग्मीति । वाग्मी वक्ता सु[illegible]
परलोकभीरुः धर्मी सुरार्चनप्रवणः प्रिय आत्मा यस्य सः
औन्नत्यकांक्षी प्रतिष्ठाकामुकः निजदारतुष्टः [illegible]
एतादृशो गुरुधातुजः ॥ ३ ॥

रक्ताक्षः सितरक्तवर्तुलमुखः सुघ्राणदंतच्छदः
शूरः पिंगशिरोरुहः पृथुशिरा धीरो बृहन्ना-
सिकः ॥ कोपाविष्टमुखः स्वकृत्यशिथिलो
दीर्घांगुलिः साहसी सर्वार्थप्रवणः परस्वहरणे
निर्भीः कुजान्मानवः ॥ ४ ॥

अथ कुजधातुजमाह—रक्ताक्षेति । रक्ताक्षः सितरक्तवर्तुलास्यः
सुघ्राणदंतच्छदः शूरः पिंगकेशः बृहच्छीर्षः धैर्यवान् बृहन्ना-
सिकः सक्रोधमुखः स्वकृत्ये शिथिलः दीर्घांगुलिः साहसी सर्व-
कार्यप्रवीणः परस्वहरणे निर्भीश्चौरः कुजधातुजः एतादृशः
स्यात् इहापि पूर्ववत्सर्वं व्यत्ययाद्बोध्यम् ॥ ४ ॥

तेजस्वी सितगर्भदृक् सुवदनो सेव्यो जिता-
रिर्बृहच्छीर्षो दीर्घरवः क्षणाशुभशुभो धन्यो-

ऽर्कधातुः पुमान् ॥ स्वक्षः सूनृतवाक् सदोज्ज्वलमुखो ह्रस्वश्रवाः पीवरो युक्तभ्रू रुचिरोरुकः प्रियरतिर्गीतप्रियः शुक्रजः ॥ ५ ॥

अथार्कधातुफलमाह—तेजस्वीति । प्रतापी श्वेतवर्णः गार्मेतेऽक्षिणी यस्य सः तथा सुंदरः असेव्यः न सेव्यो यस्य स तथा प्रभुरित्यर्थः। निर्जितारिः बृहच्छीर्षः दीर्घत्वः अव्यवस्थितचित्तः धनधान्याढ्यः एतादृशोऽर्कधातुः पुमान् स्यात्। अशुभेऽर्के पुरा व्यत्ययादिति बोध्यम्। अथ शुक्रधातुफलमाह—स्वक्षेति । शोभनाक्षः सूनृतवाक् उत्तमवाक् सर्वदा प्रसन्नास्यः ह्रस्वकर्णः पुष्टः युक्तभ्रूः रुचिरौ ऊरू यस्य प्रियस्त्रीकः गीतप्रियः एतादृशः शुक्रधातुजः स्यात् अशुभे पुरा व्यत्ययादिति बोध्यम् ॥ ५ ॥

दीर्घास्यो लघुदर्शनश्च भिन्नवर्णोऽल्पश्मश्रुः शुभवदनः सुतीक्ष्णनासः ॥ स्वल्पांगः सुदृढमतिः परत्र भीरुः सौम्यात्मा गुरुजनपूजको दयालुः ॥ ६ ॥

अथ बुधधातुफलमाह—दीर्घास्य इति । दीर्घास्यो बृहन्मुखः । लघुदर्शनोऽल्पदृष्टिः । चित्रवर्णः । स्वल्पकूर्चः शोभनमुखः । कीरवन्नासा यस्य । स्वल्पगात्रः । शास्त्रेषु दृढमतिः । परलोकभीरुः । गुरुभक्तः । दयावान् । एतावानेतादृशो बुधधातुजः स्यात् अशुभे व्यत्ययः ॥ ६ ॥

गौरच्छविः शुभवचा रुचिरप्रमाणः सुश्मश्रुरल्पमतिरध्वरतिश्च शीतः ॥ कूटप्रियः प्रकटकृत्यकृदस्वहिंस्रः शृंगारवान् बहुरिपुः शशिनोऽतिभीरुः ॥ ७ ॥

इति कर्मप्रकाशिकायामष्टमः शरीराधिकारः ॥८॥

अथ चंद्रधातुफलमाह—गौरच्छविरिति । गौरकांतिः । मधुरवचनः । सुरुचिरप्रमाणः । नातिह्रस्वः नातिदीर्घश्च । सुश्मश्रुः शोभनकूर्चः । हीनबुद्धिः । अध्वरतिः । शीतप्रकृतिः । कूटप्रियः । प्रकटकृत्यकृत् प्राकट्यकर्ता । अस्वहिंस्रः स्वकार्यनाशको न भवति । शृंगारी । बहुरिपुः बह्वरिः । अतिभीरुः एतादृशश्चंद्रधातुजः स्यात् अशुभे व्यत्ययः ॥ ७ ॥

इति श्रीकर्मप्रकाशिकावृत्तावष्टमः शरीराधिकारः ॥ ८ ॥

---

## अथायुर्दायाधिकारः ।

सूर्येन्दुलग्नसहमानि कुहूश्च राकाभागैः क्रमेण पुरुषायुषि पंचकं स्यात् ॥ दृष्टो य एष्वधिकृतैस्तदवाप्तराशेर्हिल्लाज इत्यभिहितः स हि ताजिकज्ञैः ॥१॥

अथायुर्दायाधिकारो व्याख्यायते । तत्रादौ हिल्लाजनिर्णयः । सूर्येंदुलग्नेति—सूर्यः चंद्रः । लग्नम् पुण्यसहमम् गतपर्वांतकालं

चेति इदं पंचकं पुरुषस्यायुर्ज्ञानार्थं विचारणीयम् । एषु पंचकेषु योऽधिपातिर्निर्दिष्टः स हिल्लाजः । वक्ष्यमाणप्रकारेण ताजिकज्ञैः कथितः ॥ १ ॥

जाते दिवा गगनलाभविलग्नगोऽर्के-
पुंसि स्त्रियां च नवरंध्रमदेषु पुंसि ॥
एकेन चाधिगतभाधिकृतेन दृष्टे
हिल्लाजकृत्स च ददाति बलात्समायुः ॥ २ ॥

जातेत्यादि दिवाक्रममाह । आदौ रविस्तदनंतरं लग्नात्पूर्वोक्तानुक्रमेण यदा निशि जन्म तदायं क्रमः तथा आदौ चंद्रः पश्चाल्लग्नं तदनंतरं जननादिनाऽतपर्वांतलग्नं ग्राह्यं तदनु पुण्यं तदनु पर्वांतलग्नं एवं चतुर्णां मध्ये एकः को वा हिल्लाज इत्यत्रापेक्षयाह—प्रथमं रविरिति । जन्मलग्नाल्लग्नदशमैकादशस्थानस्थो रविर्हिल्लाजसंज्ञः अथ उक्तस्थानाभावे एतत्स्थाने चेन्न भवति तदा नर्क्षे पुरुषराशौ लग्नात्सप्तमाष्टमनवमस्थो भवति तदा रविरेव हिल्लाजः । यदि सूर्याभावे सति तदा लग्नं ग्राह्यं तल्लग्नं तदीशोऽपि यदा पापग्रहदृष्टियुक्तो न तदा लग्नं हिल्लाजः उक्तरीत्या लग्नं चेन्न भवति तदा पुण्यसहमम् । तदप्युक्तवन्न भवति तदा गतपौर्णिमान्तं लग्नं ग्राह्यम् । तदपि पापयुतदृष्टं वा तदीशोऽपि तदा दिवसे रविः रात्रौ चंद्रो हिल्लाजसंज्ञः अयं दिवाक्रमः । अधिकृतमाधिकृत इत्यस्यार्थः । अधिकृतानि च मानि च अधिकृतमानि आधिकृतमाना जन्म-

लग्नपुण्यसहमपर्वीतलग्नानां योऽधिकृतः सः पापेन युक्तदृष्टो न भवति यस्य जन्मलग्नादेः स हिल्लाजो ज्ञेय एष्वधिकृतैस्तद्राशिपैर्दृष्टः स राशिरेव हिल्लाजसंज्ञकः ॥ २ ॥

पूर्वं रविर्लग्नगतो विभानुचन्द्राढ्यलग्नं गतपर्वभागम् ॥ दिवाक्रमोऽयं निशि चेन्दुरादौ लग्नं च यौद्रर्कयुगांतपर्वं ॥ ३ ॥

पूर्वं रविर्लग्नग इति । स्पष्टार्थोऽयं श्लोकः ॥ ३ ॥

रात्रौ विधौ सकलकेन्द्रसुतायरंध्रदुश्चिक्यगोयुवतिभे फलदस्तथैव ॥
ताभ्यां विना खलु विलग्नमथो तदीशः
क्रूरो बली न पतितो न च वक्रदग्धः ॥ ४ ॥

अथ रात्रिविक्रममाह—रात्रौ विधाविति । जन्मलग्नात्तृतीयैकादशकेंद्रस्थः पंचमस्थो वा चंद्रः अष्टमगः स्त्रीराशौ चेत्सोऽपि गृह्यते । यदा चंद्रराशिस्वामिदृहेशद्रेष्काणेशानां मध्ये यः स्वाधिकारे स्थितः चंद्रः तं चंद्रं स्वसखुतः पश्यति स चंद्रो हिल्लाजः एवं चेन्न तदा जन्मलग्नं क्रूरयुक्तं तदीशोऽपि बलवान् शुभस्थानगस्तदा लग्नं ग्राह्यम् । तस्य ये पंचाधिकारिणस्तेषां मध्ये यः स्वाधिकारी भूत्वा लग्नं पश्यति तदा लग्नप एव हिल्लाजः एवं सर्वत्र योजनीयम् । यदा जातानां हिल्लाजस्य न संभवस्तदा ते स्वल्पायुष इति बोध्यम् ॥ ४ ॥

तस्माद्दते सहममेव पुरोक्तरीत्या
तस्माच्च पूर्णतिथिदर्शगतं विलग्नम् ॥
सूर्यांशकोऽस्य तु दिवोदितपूर्णिमायां
चंद्रांशको निशि दिवा रविदर्शगायाम् ॥ ५ ॥

तस्मादिति । सूर्यांशकोऽस्य तिथिं पूर्वं यस्य जातस्या- युर्निर्णये दिवा सूर्यांशकः उदितः रात्रौ चंद्रांशकः उदितः तथापि पर्वणो विशेषः पौर्णिमास्या तु निशि दिवा चंद्र एवायुःप्रदः दर्शगाया निशि दिवा रविरेव आयुःप्रदाने ग्राह्य इत्यर्थः ॥ ५ ॥

सर्वैश्च तैरशुभसौम्यदृगित्थशाले-
रल्पायुरेव हि विपर्ययतश्चिरायुः ॥
हिल्लाजभाग इह दग्धफलाल्पदश्चे-
देकांशकेन गणयेन्मनुजस्य वर्षम् ॥ ६ ॥

सर्वैरिति । पूर्वोक्ता ये पंच सूर्यादयः आयुःप्रदास्तैः पापैरित्थशालितैः स्वल्पायुः शुभेत्थशालितैस्तदा चिरायुः । तेषा बलवत्त्वहीनानां मध्ये यादृशं बलं तादृशं बलं तादृशमायुः प्रयच्छंति । इह हिल्लाजो दग्धश्चेत्तदा वर्षं वर्षं प्रति अंशं गणयेत् । सोंऽशः क्रूरस्थाने आगतः क्रूरेण शत्रुणा दृशा दृष्टः तत्र वर्षेऽरिष्टं वदेत् यदि शुभानां तेजो नयाति तदा ज्ञेयम्॥६॥

हिल्लाजभागमशुभं भ्रमयेत्तदादे-
र्वर्षानुवर्षमथ पापपदे यदा स्यात् ॥
तद्दृष्ट उत्कटदशाथ तदा विनाशो
जंतोर्न चेदुपरि याति शुभस्य तेजः ॥ ७ ॥

हिल्लाजभागेति । हिल्लाजभागमशुभमित्यत्राशंका हिल्लाजस्तु सर्वैः प्रकारैः पंचसु बलिष्ठः इति पूर्वमुक्तं अधुनाऽशुभं हिल्लाजं भ्रामयेदित्युच्यते । अतः पूर्वापरविरोधः समागतः । अतः स्थानबलात्सूर्यचंद्रयोर्हिल्लाजत्वमुक्तम् । तयोर्बलाबलविचारो नोक्तः अतः सूर्यचंद्रयोर्भवति जन्मलग्नादीनाम् उत्तमवर्षप्रतिपादकानि भवनानि ल १० तनु १ सप्तम ७ दत्तं ४ एतानि मध्यमवर्षप्रतिपादकानि भवनानि आय ११ सुत ५ भृ ४ एतानि अधमवर्षायु प्रतिपादकानि भवनानि ९ । २ । ३ लघुवर्षप्रमितमासायुःप्रतिपादकानि भवनानि ६ । ८ । १२ एते हिल्लाजस्य पंचाधिकारिणः । उदाहरणम् । चंद्रो मेषे द्वाविंशतिभिरंशैः स्थितः । तदा भौमो राशीशः चंद्रराशेरुच्चं मकरः अत उच्चेशः शनिः हद्देशो भौमः द्रेष्काणेशः शुक्रः नवांशेशः शुक्रः एतेषां स्वाधिकारीशः स्वत्तखुत्तः दशः बलं दृग्बलं दृग्बलं करोतीति दृग्बलकरः हिल्लाजस्य दृग्बलकरः हिल्लाजदृग्बलकरः स चासौ उच्चगश्च हिल्लाजदृग्बलकरोच्चगः॥७॥

---

१ दत्तं चतुर्थभवनम् ।

केचिद्दिवा नृजनने तरणावयोग्ये
चंद्रो दिवाप्यवनिलग्नगयोपिदृक्षे ॥
नक्तं विधावनुचिते तपनश्चतुर्थः
पंचद्विकेषु नवमाधिकृतश्च पुंसि ॥ ८ ॥

केचिदिति। केचिदाचार्या एवं वदंति। दिवा अयोग्ये सूर्ये चंद्रोऽपि द्रष्टव्यः स्त्रीराशिमाश्रित्य चंद्रो लग्ने चतुर्थे वा भवति तदा चंद्रो हिल्लाजः। रात्रौ अयोग्ये चंद्रे सूर्यो निरीक्ष्यः सोऽर्कः स्वाधिकारे भूत्वा ४।५।२।९। एतत्स्थानस्थः सत्पुरुषराशौ तदा सूर्यो हिल्लाजो ज्ञेयः ॥ ८ ॥

चंद्रो भवेन्न यदि योग्यतया हिल्लाज-
स्तच्चंद्र एव स इव भ्रमतः करोति ॥
साहायिकं मृतिकृतश्च शशी हिल्लाजः
क्रूरस्तनौ मुथशिलोऽस्य दिवार्क एवम् ॥ ९ ॥

चंद्रो भवेदिति। यदि चंद्रः अयोग्यतया हिलाजो हिल्लाजो न भवेत्तदा हिल्लाज इव चंद्रं भ्रामयेत्। यदा हिल्लाजोऽशुभो भवति तस्मिन् वर्षे चंद्रोऽपि भ्रमणरीत्याऽशुभश्चेत्तदा विशेषेणारिष्टं बोध्यम्। यदि हिल्लाजश्चंद्रलग्नगेनापापेनेत्यशालं चेद्भवति तदारिष्टकृत्। शुभदृग्योगं विना भ्रमणेऽरिष्टम्। एवं दिवा सूर्यो ज्ञेयः ॥ ९ ॥

हिल्लाजदृग्बलकरोच्चगखत्तखुत्तो-
ऽब्दानुत्तमानि खतनुद्युनगोऽधिकारी ॥
शुद्धः शुभोऽनधिकृतः खलु मध्यमानि
वक्रो विरश्मिरशुभो ददतेऽधमानि ॥ १० ॥

हिल्लाजेति । हिल्लाजस्य ये पंचाधिकारिणस्तेषां मध्ये ये स्वाधिकारिणो भूत्वा हिल्लाजं पश्यंति ते खत्तकुत्ताः । तेषां मध्ये योऽधिकारी लग्न १ सप्तम ७ दशम १० गः शुभदृष्टिः पापदृष्टिवर्जितश्चेत्स्वकीयानि उत्तमानि वर्षाणि ददाति । स चेत्स्वाधिकारहीनः तदा मध्यमानि । स हिल्लाजः उक्तस्थाने वक्री सूर्यरश्मिगः क्रूरेण पीडितस्तदाऽधमानि वर्षाणि ददाति ॥ १० ॥

आये सुते भुवि शुभो ह्यधिकारवान्स
मध्यानि तानि तु लघून्यधिकारहीनः ॥
दग्धोऽशुभे क्षितियुतः किल वक्रगामी
नीचो ददाति लघुवर्षपदे च मासान् ॥ ११ ॥

आयेति । सद्लीलः स्वाधिकारी भूत्वा एकादशपंचमचतुर्थगः शुभदृग्युतोऽशुभयोगरहितः तदा मध्यमानि वर्षाणि स चेदधिकारहीनस्तदा लघुवर्षाणि ददाति स चेद्दग्धः क्रूरितः नीचगः वक्रस्थस्तदा लघुवर्षोक्ततुल्यमासान्ददाति ॥ ११ ॥

मार्गद्वितीयसहजेषु शुभाधिकारी
दत्ते लघून्यनधिकृच्च तदुक्तमासान् ॥
क्रूरार्दितो दिशति माससदृग्दिनानि
षष्ठाष्टमव्ययगतो लघुसंज्ञमासान् ॥ १२ ॥

मार्गेति । सः आयुःप्रदः यदि स्वाधिकारे भूत्वा द्वितीयतृतीयनवमगः बली अशुभदृग्योगरहितस्तदा स्वीयानि लघुवर्षाणि अधिकारहीनो मासान् । स च क्रूरितो दग्धो वा तदाः लघुवर्षोक्तमासान्दिनानि सस्वाधिकारी भूत्वा शुद्धषडष्टद्वादश ६ । ८ । १२ गस्तदा मासान्दिशति ॥ १२ ॥

मासप्रमाणदिवसानधिकारबाह्यः
क्रूरार्दितो दिनसमानि मुहूर्तकानि ॥
दत्ते शुभोऽशुभगतोऽपि हि खत्तखुत्तः
स्वान्यब्दकान्गुरुलघूनि यथोदितानि ॥ १३ ॥

मासेति । सोऽधिकारहीनः लघुवर्षमितानि दिनानि स दग्धः दिनायुक्तः बली नीचगस्तदा स्वलघुवर्षमितान् मुहूर्तान् ददाति शुभाशुभप्रकारेण स्वकीयान्युत्तमाधमहीनानि आयुर्वर्षाणि खत्तखुत्तो ददाति ॥ १३ ॥

लग्नस्मरांबरचतुर्थसुतायसंस्थो
यः खत्तखुत्तदृगसौ लघुवर्षदायी ॥

वक्री विरश्मिरशुभोऽब्दसमांश्च मासां-
श्छेपर्क्षगश्च विबलोऽस्तमितो दिनानि ॥ १४ ॥

लग्नेति । यः स्वाधिकारी भूत्वा लग्नसप्तमदशमचतुर्थपंचमैकादशगः शुद्धः स्वत्तखुत्तं पश्यति । सोऽपि स्वकीयानि लघुवर्षाणि ददाति । स चेद्वक्री अस्तं गतः क्रूरितो वा एषु लग्नसप्तमदशमैकादशस्थानेषु गतः तदा लघुवर्षमितान्मासान् ददाति । स चेदन्यर्क्षगतः २ । ३ । ६ । ८ । १२ एषु गतः शुद्धस्तदा लघुवर्षमितान्मासान् ददाति अस्तंगतो वक्री तदा दिनानि ॥ १४ ॥

पुत्रायमांगेसहजेकगताः शुभाः स्यु-
र्मध्याब्ददाः खतनुतुर्यमदेषु मध्याः ॥
क्रूराश्च तेषु किल हानिकराः ससौम्याः
सौम्येक्षिता न खलु तेऽपि विनाशयंति ॥ १५॥

पुत्रायमार्गेति । दलीलद्रष्टापि दलीलायुर्वर्धयति इति पूर्वमुक्तम् । तत्र विशेषमाह । यदि स शुभग्रहस्तस्मात् खत्तखुत्तात् ५ । ९ । ११ । ३ एषु गतः स्यात् तदा पूर्वोक्तानि वर्षाणि ददाति । स चेत् १० । १ । ४ । ७ एषु गतः दलीलात् शत्रुदृष्ट्या च पश्यति तदा तदर्धं वर्षमासदिनं मुहूर्तादि वर्धयति । तेषु पापाः खतनुतुर्यमदेषु पापाः । यथोक्तलघुवर्षमासादिहानिकराः अर्थात्पुत्रायस्थानादिषु ते

पापाश्चेद्दलीलमित्राणि तदोत्तमवर्षार्धहानिं कुर्वंति । पापाः सौम्यसहिताः सौम्यदृष्टाश्चेद्भवंति तदा हानिं न कुर्वंति ॥१५॥

राह्वास्यगो दिशति सांघ्रिमिहाब्दवृंदं
पुच्छस्थितश्चरणवर्जितखत्तखुत्तः ॥
सर्वेऽनृजुस्वगृहसत्तमनीचसंस्थाः
सक्रूरसत्तमदृशो बलदा न ते स्युः ॥ १६ ॥

राह्वास्यग इति । राहोर्मोग्यांशः राहोर्मुखं तत्र स्थितो दलीलः लघुवर्षचतुर्थांशमितानि वर्षाणि वर्धयति । स चेत्पुच्छस्थितः केतुयुक्तस्तदा लघुवर्षाणां चतुर्थांशमितां हानिं करोति । ते आयुषः ते वृद्धिकर्तारो ग्रहाः यत्र शुभाः तदा ते वर्धयंती यदा ते पापाः तदा हानिं कुर्वंति ॥ १६ ॥

स्याब्दप्रदे तु मकबूलिनि खत्तखुत्ते
क्रूरः क्षमो भवति नास्य फलं निहंतुम् ॥
सौम्यश्चतुष्टयसुतांत्यतृतीयं आयु-
र्दत्ते परो न स च वा मकबूलसंस्थः ॥ १७ ॥

स्याब्दप्रदेति । दलीले मकबूलगति सति हानिकर्त्ता क्रूरखे-
टोऽपि हानिं कर्तुं न शक्नोति शुभग्रहो लग्नयुक् चतुष्टयसुता-
! त्यतृतीयस्थानेषु गतः तदा आयुर्वर्धयति पापो न वर्धयंति
इति यदुक्तं तत्र । किं त्वपापश्चेन्मकबूलो नदार्धहानिं करोति
इयमेव तत्कृता वृद्धिः ॥ १७ ॥

क्रूरार्दितोऽकेंशशिनोश्च विनाशनाय
क्रूरः सखा भवति चान्यतरस्य कृत्तः ॥
क्रूरद्वयांतरगतो न विनाशनाय
केंद्रे स्वयं न तु हिलाज इहापि नैव ॥ १८ ॥

क्रूरार्दितेति । कृत्तः स्वाधिकारवान् क्रूरः क्रूरार्दिताकेशशिनोर्हीनयोरपि एतादृशयोर्यदार्कचंद्रयोरन्यतरस्य सखा मित्रं स्यात् मित्रदृष्टिस्थानस्थः स्यात् स हानिकर्ता क्रूरश्चेत् क्रूरद्वयांतस्थः स्यात्तदापि हानिकर्ता न भवति स हिलाजः हिलाजः स्वयं केंद्रे क्रूरोऽपि केंद्रस्थितः तदापि हानिं करोत्येव ॥ १८॥

सार्कोऽर्कहीन ऋतुदः खलु खत्तखुत्तः
क्रूरोऽपि सम्भवति तस्य दिनस्य पोष्टा ॥
नीचस्थितस्तु बलहानिकरोऽस्य पत्युः
पूर्वोक्तपंचभिरसौम्यहतैर्विपत्तिः ॥ १९ ॥

सार्क इति । सूर्ययुक्तो दलीलः सूर्यहीनायुर्वर्षमितानि वर्षाणि लब्धायुषि वर्धयति क्रूरोऽपि सः खत्तखुत्तः सार्कः सन् तस्य सूर्यस्य लघुवर्षमितस्य दिनस्य पोष्टा भवति न आयुर्हानिकरो भवति शुभो वर्धयतीति किं चित्रम् । स वृद्धिकर्ता शुभः स्वराश्यधिपः यदि नीचे स्थितः स्यात्तदा

१ केषुचित्पुस्तकेषु " जंतोः " इत्यपि पाठ उपलभ्यते ।

लब्धायुषि हानिं करोति । अथ पूर्वोक्ताः पंच सूर्यादयो ये च क्रूरहताः स्युस्तदा जंतुर्गतायुः स्यात् ॥ १९ ॥

खांकेभांशांगपंद्गाः पंडगनिधिनगाक्षिद्विपाः शैलबाणाः श्रेष्ठाः सांधग्रहाग्निद्व्यमितिखयुगे-भाब्धिसांधत्रिवेदाः ॥ बाणाब्ध्यर्धाग्ररामा-श्रम इनमुखाच्योमगानां समाः स्युर्मध्या गोभूशरांक्षिशरेशाशिखभुजार्के भखाग्नीह नीचाः ॥ २० ॥

खार्केति । स्पष्टार्थोऽयं श्लोकः ॥ २० ॥

श्रेष्ठः श्रेष्ठं मध्यमो मध्यमस्त्वं हीनो हीनं वर्ष-मासादि दत्ते ॥ एकीकृत्वा शेषमेतद्यथोक्तं कुर्यादायुर्हायनानां प्रमाणम् ॥ २१ ॥

इति श्रीकर्मप्रकाशिकायां परनाम्नि मनुष्य-जातक आयुर्दायाधिकारो नाम नवमोऽधिकारः ॥ ९ ॥

श्रेष्ठः श्रेष्ठमिति । स्पष्टार्थोऽयं श्लोकः ॥ २१ ॥

इति मनुष्यजातके आयुर्दायवर्णने नवमोऽधिकारः ॥ ९ ॥

## अथ दशानयनाधिकारः ।

संपश्यतो जननलग्नगभोग्यभागां-
स्तस्माद्दशा भवति यस्य च यस्य तस्य ॥
हद्दाधिपस्य धुरि तस्य दशाप्रवेशो
ज्ञेयोऽथ वा हगयमस्य च धातुरीक्षः ॥ १ ॥

अथ दशानयनाधिकारो व्याख्यायते । तत्राधः खंडखाद्यमतेनाहर्गणः साध्यते उक्तं च । ' शाकोऽगवसुशरो ५८७ के १२ गुणश्चैत्रादिमाससंयुक्तः । त्रिंश ३० द्गुणस्तिथियुतः पृथगिषु ५ सहितो द्विधा भक्तः ॥ पंचोदधिनवमनु- १४९४५ भिर्लब्धेनोनभाजितः पंडगनंदैः ९७६ । लब्धाधिमासार्कदिनैरधिकोऽधो रुद्र ११ संगुणितः ॥ स्वरनववेद ४९७ युतोऽधस्यगतिथिरुद्रै ११९५७३ रासफलविहीनः । त्रिखनग ७०३ फलातावमरोऽत्रोनोहर्गणोऽर्कादिः संपश्यत इति ॥' जन्मलग्नगतभोग्यभागान्संपश्यतः यस्य धुरि गृहे हद्दास्थितस्य दशाप्रवेशस्तेन दशा ज्ञेयाः । अस्यार्थः । लग्नमध्ये जन्मसमये यस्य हद्दा वर्तते तस्य हद्दांशेषु ये लग्नभोग्यांशास्तत्र भोग्या हद्दांशास्तन्मितवर्षावधि तस्य दशा ज्ञेया । तदग्रे ये हद्दांशास्तत्संख्याकानि वर्षाणि तस्य हद्देशस्य दशा एवमग्रेऽपि । हद्दाधिपं यस्मिन्भवांशे ये ग्रहा पश्यंति तस्मिन्वर्षे तद्ग्रहानुफलं वक्ष्यमाणं हद्देशस्यापि बोध्यम् ॥ १ ॥

उदाहरणम्।

जाता बुधस्य किसिमा शुभदृग्युतोऽस्ति
शुक्रः सुतार्थगृहगः सुहृदंबरस्थः ॥
जीवः कुजश्चरणदृक्समदृष्टिरार्किः
पश्यंत्यमीष्वभिदधीत पृथक्फलानि ॥ २ ॥

अत्रोदाहरणम्--जातेति। जन्मसमये मेषलग्नं त्रयोदशांशैरुपलक्षितमासीत्। बुधस्य किसिमा प्रवृत्ता नाग ८ मितानि वर्षाणि तत्फलं ज्ञेयम् स च शुभदृग्युतोऽस्ति लग्नात् सुत ५ भवगेन ११ सितेन दृष्टः सुहृ ५ दंबरस्थेन १० गुरुणा भौमेन चरणदृष्ट्या दृष्टः शनिना सप्तमदृष्ट्या दृष्टः तेषां फलानि वक्ष्ये ॥ २ ॥

ज्ञे ज्ञानपंडितकलालिखनादि दृष्ट्या
जीवस्य सत्पुरुषसौहृदगौरवादि ॥
श्रीस्त्रीसुतार्थगुरुतादिदृशा सितस्य
सौरो तु रोदनफलं कुभुवस्तदाभम् ॥ ३ ॥

अथ बुधदशाफलमाह--ज्ञे ज्ञानेति। ज्ञे बुधदृष्टे ज्ञानं पांडित्यम्। गुरुदृष्टे वृद्धपुरुषेभ्यः स्थानप्राप्तिर्वा लाभः। शुक्रदृष्टे लक्ष्मीगौरवम्। शनिदृष्टे दुःखं रोदनं पुत्राणां मृतिः अन्यदप्यशुभम्। भौमदृष्टे वह्निभयं विदेशगमनम्। शनियुक्तो भौमः दशाधिपं पश्यति चेत्कष्टीपत्तरक्तधिकारादिरुक्स्यात्। एवं बलानुमानेन सर्वत्र बोध्यम् ॥ ३ ॥

दिग्दंतिविश्वगुणपक्षनवेशसार्क-
शैला द्युजन्मनि दशासु समा ग्रहाणाम् ॥
सूर्यांशनोबुधविधुंतुदकेतुचंद्र-
मंदार्चितक्षितिभुवां क्रमशो भवाः स्युः ॥ ४ ॥

दिग्दंतीति । सूर्यादीनां निसर्गदशावर्षाणि रवेः १० शुक्रस्य ८ बुधस्य १३ राहोः । केतोः २ चंद्रस्य ९ शनेः ११ बृहस्पतेः १२ भौमस्य ७ अयं दिवा जन्मनि क्रमः ज्ञेयः ॥ ४ ॥

चंद्रार्किजीवकुजसूर्यसितज्ञराहु-
केत्वीश्वरा निशि किलेति शरादिसंख्याः ॥
अंतर्दशास्तदनुपातवशाद्दशासु
सर्वासु तत्पतिसमानफलं प्रकल्प्यम् ॥ ५ ॥

अथ रात्रिजन्मनि क्रमः—चंद्रार्कीति । चंद्र १० शनि ८ गुरु १३ मंगल ३ सूर्य २ शुक्र ९ बुध ११ राहु १२ केतु ७ एषां योगः ७५ । दशासु त्रैराशिकेन सर्वेषामंतर्दशाः । तत्पतिधातुजं फलं तस्मिन्वर्षे योज्यम् । अथ ह्रद्दादशाज्ञानार्थं क्रमः । चक्रं च लग्नस्य राशिभोग्यांशमारभ्य क्रमेण यावदायुस्तावन्मिता दशा ज्ञेया तद्गतांशेषु तस्मिन्गतास्तद्गताः तद्गताश्च ते अंशाश्च तद्गतांशास्तेषु तद्गतांशेषु तस्मिन् स्वायुषि गता वर्तमाना ये अंशाः ते यस्मिन्यस्मिन्नंशे यस्य यस्य ग्रहस्य यादृशा दृष्टिः तदंशसंबंधेन तादृशं फलं वाच्यम् । एतस्य साम्यर्थं साहा-

न्यायं च हिल्लाजचंद्रयोः मत्यंगभ्रमणेन लग्नस्य मुंथाभ्रमणेन च यावदिष्टवर्षपर्यंतं गणयित्वा शुभपापसंचयाच्छुभाशुभफलं साहाय्यं तस्य साक्षी वर्षप्रवेशलग्नं तस्मादपि मत्यंगं एको दिवसः अनेन क्रमेण यस्मिन्वर्षे यस्मिन्दिने शुभाशुभतद्दशा-रहस्सिसंयोगस्तस्मिन्दिने शुभाशुभं फलं वाच्यम् । तद्वर्षलग्नादिदं साक्षित्वेन ग्राह्यम् । यतः जन्मकालिका दशास्मात्प्रबलास्ति ॥५॥

सूर्ये दशापरिदृढे स्वबले स्वतुंगे
राज्यं कुलोचितमुपैति पदस्य लाभः ॥
स्वर्क्षद्रेकाणनिजहद्दगते च मध्यं
नीचेऽरिभागमुपगे रुगकीर्तिदौस्थ्यम् ॥ ६ ॥

अथार्कादीनां फलान्याह–सूर्येति । स्पष्टार्थोऽयं श्लोकः ॥६॥

चंद्रे फलं रविवदाढ्यबले च भौमे
सेनापतित्वमसुहृद्विजयोधनाप्तिः ॥
मध्ये पुरोक्तमिह मध्यममेव हीने
नीचत्वमाप्तकलहो रुगकीर्तिभीत्यः ॥ ७ ॥

चंद्रेति । चंद्रस्य फलं रविवत् । बलवति भौमे सेनापतित्वम् । अग्रे सुगमम् ॥ ७ ॥

सौम्ये दलीलवति शास्त्रकलादिनाथः
सेवाफलं नरपतेः सुतसौख्यलाभः ॥

वार्त्तादिवृद्धिरिह मध्यबले च हीने
दारिद्र्यदुर्गतिरुगार्तिजनापवादाः ॥ ८ ॥

सौम्ये इति । स्पष्टार्थोऽयं श्लोकः ॥ ८ ॥

जीवे पूर्णबले गुणी सुखधनः ख्यातः सुतप्रीतिभाङ्मान्यो व्यूढकुटुंबधृग्धुरि सतां संप्राप्तविद्यांतरः ॥ मध्ये पूर्वमुपक्रमात्फलमिह प्रीतिः सुहृद्भिर्नृपैर्हीने दौस्थ्यमकीर्तिरर्तिररतिर्भीतिश्च धर्मं भवेत् ॥ ९ ॥

जीवे इति । स्पष्टार्थोऽयं श्लोकः ॥ ९ ॥

शुक्रे चातिबले बलं हि वपुषि स्त्रीसौख्यमव्याकुलं पुत्राप्तिः प्रथिता अशेषविषयप्राप्तिः सुखाः संपदः ॥ मध्ये यत्र कृतं फलं च सकल मध्यं तु हीने भवेद्द्वेष्यस्त्रीस्वसुखी पराङ्मुखसुहृद्दुस्थश्च हास्यो जनैः ॥ १० ॥

शुक्रे इति । स्पष्टार्थोऽयं श्लोकः ॥ १० ॥

पूर्णे शनौ स्वकुलतुल्यजनाधिपत्यमारामवेश्मजलसंश्रयकारिता च ॥

मध्ये तु मध्यमुदितं सकलं च हीने
निष्कर्मतार्थसुतबंधुविनाशनानि ॥ ११ ॥

पूर्णे इति । स्पष्टार्थः श्लोकः ॥ ११ ॥

एवं च राहुशिखिनो ब्रुवते फलं हि
ज्ञात्वा दशासु किल मध्यदशासु चैवम् ॥
सम्यग्विचार्य ग्रहदृग्गतिं ग्रहाणां
दृष्टिं युतिं च विदधीत सुधीर्नृजन्म ॥ १२ ॥

इति कर्मप्रकाशिकायां मनुष्यजातके दशा-
वर्णने दशमोऽधिकारः ॥ १० ॥

एवं चेति । एवं शनिवद्राहुकेत्वोः दशाफलं वाच्यं दशा-
पतिः कस्मिन्स्थाने तिष्ठति केन युतः इति कर्माजीवोक्तरीत्य
नृजन्मनि सम्यग्विचार्य दशांतर्दशाफलं वाच्यम् ॥ १२ ॥

इति कर्मप्रकाशिकावृत्तौ दशांतर्दशावर्णने
दशमोऽधिकारः ॥ १० ॥

अथ निधनाधिकारः ।

यत्रांशके विकलपापपदे हिलाजः
पापेक्षितः प्रतिशरक्रमणादुपैति ॥
तत्राद्यवर्षगणनान्निधनं विभाव्यं
तस्मादपीति निगदेदवसानवेलाम् ॥ १ ॥

तद्भागांतमहःकृतं विनिहितं जन्माद्युराशावधः कृत्वा रुद्र ११ गुणं द्विनंदऋतुभि ६९ र्लब्धावमाह्यान्वितैः ॥ भूयोऽधः कृतमंगशून्यदशाभिर्लब्धं खरामैर्हृतं राशेरूर्ध्वगतादपास्यमथ तं खत्र्यग्निभिः संभजेत् ॥ २ ॥ तल्लब्धं मुनिहस्तिबाणसहितं शाकं भवेच्चोद्धृतं मासाः खज्वलनैर्हृतं च दिवसास्तच्छेषमेवं कलाः ॥ तन्मध्ये निहिता घटी विघटिकाजन्माद्युजानिश्चितं रिष्टं स्याच्च ततोऽशतोऽकगुणितास्त्रिंशद्धृता रुग्दिवा ॥ ३ ॥

अथ निधनाधिकारो व्याख्यायते—यत्रांशके इति । तत्र खंडखाद्यमतेनाहर्गणानयनं पूर्वमेवोक्तं यत्रांशक इति तद्भागांतमिति तल्लब्धमिति च खंडखाद्याहर्गणं प्रसाध्य प्रतिभागं वर्षमिति रीत्या हिल्लाजो यस्मिन् भागे पापेक्षितो भवति स भागः हिल्लाजभागाद्यावंति हिल्लाजः तत्तद्भावसंख्यातावत्तसौररीत्या यद्वर्षादि तदस्य मते 'साव्रनेति दिनीकृतं जन्मकालेष्टकालयोर्योऽहर्गणः तं जन्मकालाहर्गणे योज्यारिष्टकालिकः खंडखाद्योऽहर्गणो भवति तस्मादहर्गणाद्यान्यवमानि अहानि तैरयं योज्यः चंद्राहर्गणो भवति तस्माचेऽधिमासास्तैः खराम ३० हताश्चंद्राहर्गणाच्छोध्याः शेषं सौराहर्गणो भवति

तं पञ्चाधिकशतत्रयेण विभज्य लब्धानि वर्षाणि संडखार्य शके योज्यानि इष्टशको भवति शेष खद्दहनै ३० भक्ते सौर-मासादि तस्मिन् शके तादृशो मध्यमसूर्याजोरिष्टो भवति। उदाहरण अहर्गणः सावयव १७०१९१।५।८ त्रिखाद्रिभि-७०३ गुणितो जातो १०५५८४३।७८ भक्ते ल०ं १५२५७८ पृथक् स्थाप्यं १५२५७८ एकत्र ग्माभ्राद्रिभिः १००६ भक्ते लब्धं १५१ सैकं १५२ खगमै ३० गुणितम् ४५६० अनेन पृथक् स्थितम् १५२५७८। हीनम् १४८०१८ अभ्ररसाग्नि ३६० मिर्भक्ते लब्धं गताब्दाः ४११ शेषं ९८ खरामै ३० भक्तं लब्धं मासः १ शेषं तिथयः २८।८ ॥ १ ॥ २ ॥ ३ ॥

यः पीडयेद्रिष्टकृतं हिलाजं तद्धातुना मृत्यु-रथापमृत्युः ॥ रुजायसा वा स्वगृहे बहिर्वा यद्वावगः सोऽस्य च धातुरीश्यः ॥ ४ ॥

यः पीडयेदिति स्पष्ट एवार्थः ॥ ४ ॥

सूर्ये रुजः पित्तभवा नृपाद्वा चंद्रे कफाद्भूतनये ऽग्न्यसृग्भ्याम् ॥ सौम्येज्ययोः स्यान्मरणं त्रि-दोषात्सिते स्मराद्यांगरुजोऽसुराक्योंः ॥५॥

सूर्येति । स्पष्टार्थः ॥ ५ ॥

इति मृतिकरखेचरस्वरूपं प्रतिभवनेश्वरदृ-

ग्युतौ च बुद्ध्वा ॥ निधनमभिदधीत धीरबु-
द्धिर्यवनमतप्रवरैर्यथोपदिष्टम् ॥ ६ ॥
इति कर्मप्रकाशिकायां निधनवर्णने एका-
दशोऽधिकारः ॥ ११ ॥

इतीति । स्पष्टार्थः ॥ ६ ॥
इति कर्मप्रकाशिकावृत्तौ निधनाधिकारः ॥ ११ ॥

## अथ दोषाधिकारः ।

भूर्ध्वे खे वा क्रूरिता ये च दग्धास्तेभ्यो दोषः
स्यात्स्फुटो भूम्यधोऽन्यः ॥ सूर्येंदुभ्यां चेति
पापानुसाराद्व्यक्ताव्यक्तौ दक्षवामाक्षिदोषौ ॥ १ ॥

भूर्ध्वमिति । चतुर्थभुक्तांशमारभ्य दशमभोग्यांशावधि नष्टचंद्रे दग्धे वाक्षणोर्दोषः स्पष्टः भूम्यूर्ध्वे दशमपर्यंतं चतुर्थ-भोग्यांशमारभ्य दशमभुक्तांशपर्यंतं एवं चंद्रे वामनेत्रे प्रकट-दोषः एवं सूर्ये प्रकटो दक्षनेत्रे दोषः एवं व्यक्तौ दोषौ स्तः । यदा केवलं नष्टदग्धास्तदा गुप्तदोषः इति सर्वत्र ज्ञेयम् । भूर्ध्वे खे इति । चतुर्थभोग्यांशमारभ्य दशमभुक्तांशमध्ये यदा नष्टद-ग्धग्रहाः स्युस्तदा नेत्रं विना वामकरचरणाद्यवयवेषु स्पष्टो दोषो ज्ञेयः । तथा दशमभोग्यांशमारभ्य चतुर्थभुक्तांशावधि नष्टदग्धा ग्रहाः स्युस्तदा दक्षिणाद्यवयवेषु अव्यक्तो दोषो ज्ञेयः । प्रोक्तग्रहाः क्रूरिताः स्युस्तदा स्पष्टदोषः ज्ञेयः ॥ १ ॥

भौमज्ञाभ्यां पित्तजिह्वारुजश्च शुक्रे नासाव्या-
धिरुक्तो गुदार्तिः ॥ मंदेज्याभ्यां चोपरिस्थे श्र-
वोरुग्वाधःस्थे स्यात्प्लीहरुग्धात्वसाम्यात् ॥२॥

भौमज्ञाभ्यामिति । स्पष्टार्थः श्लोकः ॥ २ ॥

केषांचिन्मते तु ।

भूर्ध्वे चंद्रे क्रूरिते नक्तमक्ष्णोर्दक्षस्यार्तिर्भा-
स्करे चापरस्य ॥ मेषे चेंदौ सौम्यदृग्योगव-
र्ज्ये लग्ने षष्ठेशेऽनृजौ रुक् शुभैश्च ॥३॥

केषांचिदन्येषां ग्रंथकाराणां मते तु भूर्ध्वे इति । भूर्ध्वे चंद्रे पापपीडिते रात्रिजन्म तदा दक्षिणनेत्रे रोगः । एवं सूर्ये वामनेत्रे रुक् । षष्ठे चंद्रे क्रूरदृष्टे शुभदृग्योगवर्जितेऽपरस्य वामनेत्रस्य रुक् । षष्ठेशो लग्नेशश्च वक्री शुभैः पतितैः स्थानस्थैर्दृष्टस्तदा नेत्ररुक् ॥ ३ ॥

एकादशांभ्यां विधौ क्रोडयुक्ते तौलिस्थे वा-
रेक्षितेऽनीज्यदृष्ट्या ॥ लग्ने चेंदौ पापयुक्ते-
त्थशाले दीर्घो रोगोऽक्ष्णोः स्वगास्ते च
पापे ॥ ४ ॥

एकादशांभ्यामिति । चंद्रः क्रूरदृष्टः शनियुक्तः एकादशांभ्यां निःसृतः तुलास्थेन मीमेनोक्षितः शुभैर्न दृष्टः क्रूरैर्युतदृष्टेत्थशालस्थान्

लग्ने तदाऽक्ष्णोः दीर्घरोगः । सूर्यः क्रूरयुतदृष्टः लग्नात् सप्तम-७ गः तदापि रोगः ॥ ४ ॥

षष्ठाधीशे वक्रितर्क्षेऽक्षिरोगो लग्ने चास्मि-
न्मंदहृष्टे कफात्मा ॥ भौमे जीवे भार्गवे ज्ञे
सचंद्रे तापाच्छोफात्कामतः शास्त्रतो वा ॥ ५ ॥

षष्ठेति । षष्ठाधीशे चंद्रे लग्ने विषमोदयराशौ च योगः। एवं चंद्रे शनिदृष्टे श्लेष्मविकारेण रोगः। एवंविधे चंद्रे भौमदृष्टे युते वेति यावत् । एवं चंद्रे गुरुदृष्टे शोफः रक्तवर्ण उष्णस्निग्धत्वेन मंदता । एवं चंद्रे भृगुदृष्टे कामात् एवं चंद्रे बुधदृष्टे शास्त्रतः शास्त्राभ्यासतोऽधः स्यात् ॥ ५ ॥

लग्नादित्याब्जत्रये क्रूरमध्ये लग्नेशेऽर्के
क्रूरिते चोदयेशे ॥ षष्ठे क्रूरे लग्नगे तद्युते
भौमे षष्ठेशे वक्रितेऽस्मिन्विधूर्ध्वम् ॥ ६ ॥

लग्नादीति । लग्नं सूर्यचंद्रौ क्रूरितौ लग्नेशोऽर्के च शोभनस्थानसूर्ये लग्नेशौ क्रूरितौ षष्ठस्थाने स्थितौ तदा योगः। उदयेशे षष्ठे क्रूरे लग्नगे योगः क्रूरो लग्ने षष्ठेशेन युतः भौमेन वा युतस्तदा योगः। षष्ठेशे वक्रिणि चंद्रे द्वादशेऽतियोगः॥६॥

चंद्रादित्यौ विक्रमे केन्द्रगौ वा
भौमे केंद्रे चेंदुसौम्यर्क्षगे वा ॥

क्रूरदृष्टे रंध्रषष्ठांत्यगाः स्युः
सौम्याः सूर्येऽस्ते यमर्क्षे तदांधः ॥ ७ ॥

चंद्रादित्यावेति । चंद्रार्कौ तृतीये केंद्रगौ तदा योगः । भौमे केंद्रमध्येऽशुभग्रहराशिगते योगः । रंध्रषष्ठात्यगताः सौम्यास्तदा चंद्रार्कौ क्रूरदृष्टौ तृतीयकेंद्रगौ स्तस्तदा योगः । मकरकुंभस्थेऽर्के सप्तमगे योगः ॥ ७ ॥

चंद्रे सूर्ये चांधकारांशमध्ये चक्षुर्नाशोऽब्जे
सभौमेऽह्नि शुक्ले ॥ युक्ते मंदेनासितेऽर्के च
पुण्ये सौम्यादृष्टे वामकाणो निशायाम् ॥ ८ ॥

चंद्रेति । चंद्रार्कौ अंधांशे यदा स्तस्तदा चक्षुर्नाशः । शुक्ले पक्षे दिवा जन्मनि सभौमे चंद्रे सति ना पुरुषः वामकाणः । कृष्णपक्षे चंद्रे शनियुते रात्रिजन्मनि सूर्ये नवमगे शुभदृष्टिहीने वामकाणः ॥ ८ ॥

सूर्ये भूर्ध्ये चाह्नि दक्षाक्षिकाणश्चंद्रेऽरीशे
भूसुते चातिलग्ने ॥ सूर्याधस्ताज्ज्ञारयोश्च-
क्ष्मक्ष्णोरेकांशे वा भौमशीतांशुयोगात् ॥ ९ ॥

सूर्येति । दिवा जन्मनि भूम्युपरिगेऽर्के क्रूरदृष्टे दक्षनेत्रकाणो भवति षष्ठेशश्चंद्रः क्रूरदृष्टः शुभदृष्टिहीनः स्यात्तदा दक्षनेत्रकाणो भवति । षष्ठेशे भौमे लग्ने सति शुभदृष्टिहीने

पापदृष्टे साति पुष्पयुतः काणो भवति । दिवा जन्मनि भौमबुधाभ्यामेकोऽपि सूर्योऽधःस्थितः तदा पुष्पचिह्नं भवति । चंद्रभौमौ एकभागे यदि स्तस्तदा नेत्रे बिंदुः स्यात् ॥ ९ ॥

शुक्रेऽरीशे लग्नगे स्रावणांधो वैवर्ण्यं स्यात्तु-
ल्यदृष्ट्येंद्रसाध्वोः ॥ वक्रर्क्षेऽब्जादित्ययोः
क्रूरदृष्ट्या वक्राक्षः स्यादंत्यषष्ठस्थयोर्वा ॥ १० ॥

शुक्रेति । षष्ठेशे शुक्रे लग्नस्थे क्रूरदृष्टे जलस्रावेणांधः स्यात् । चंद्रात्सप्तमगाः क्रूराः स्युस्तदा वैवर्ण्यं स्यात् । चंद्रार्कौ विषमोदयराशौ क्रूरदृष्टौ यदा भवेतां तदा वक्राक्षः स्यात् । अंत्यषष्ठस्थौ वा तदापि वक्राक्षो भवेत् ॥ १० ॥

सूर्ये नष्टे वक्रराशिस्थिते च भौमाक्रांत्या वा
कुलीरस्थिरेऽब्जे ॥ नंदांशांतश्चापगे चादि-
मेऽशे नक्तं भानौ चाह्नि मंदेक्षितेंऽधः ॥ ११ ॥

सूर्येति । दिवा जन्मनि नष्टेऽर्केऽविषमोदयराशौ भौमदृष्टे युते वा वक्राक्षः स्यात् । दिवा जन्मनि नष्टेऽर्के विषमोदयराशौ कर्के चंद्रेऽधांशमध्ये योगः रात्रौ जन्मनि धनुःस्थेऽधांशगते चंद्रे अंधः स्यात् । दिवा भानौ वा धनुःस्थेऽधांशगतेंऽधो भवति ॥ ११ ॥

---

१ वैवर्ण्यं नाम निस्तेजस्कत्वम् । २ वक्राक्षः काणः विपर्यस्तदृष्टिर्वा ।

क्षीणे चंद्रेऽनीज्यदृष्ट्यार्किदृष्टे चापस्थेऽतीवात्र तत्स्थे द्वये वा ॥ सूर्याब्जे क्रूरयुग्मादिंते च व्योमस्थेंदौ प्रेक्षिते चाल्पदृष्टिः ॥ १२ ॥

क्षीणेति । क्षीणेंदौ धनुषि मंददृष्टे गुरुशुक्राभ्यामदृष्टेऽतीवांधः स्यात् । क्षीणेंदौ धनुषि शनियुतशुभैरनीक्षितेऽतीवांधः । सूर्याद्द्वितीये चंद्रे क्रूरार्दितेंऽधः भवति । दशमस्थेंदौ पापेक्षिते शुभदृष्टिहीनेंऽधः स्यात् ॥ १२ ॥

नीचेऽब्जे चांत्यद्विपोः क्रूरदृष्टे भूमीपुत्रेऽभ्युद्यतेऽर्कास्तगे च ॥ केंद्रेऽकेंद्रौरंध्रभागेंऽबुराशौ नीचे मंदे चाशुगेऽर्कोपरागे ॥ १३ ॥

नीचेति । नीचगे चंद्रे षडंत्यगते क्रूरेण दृष्टेऽधः । अस्तंगते भौमे लग्नस्थेंऽधः अष्टमगौ चंद्रार्कौ जलराशौ केंद्रेंऽधः । अस्तंगते शनौ नीचेऽर्कग्रहणे जन्म स्यात् तदांधो भवेत् ॥ १३ ॥

अथ कर्णदोषाः ।

सौम्येऽरिपे कुगृहगे शनिना तुरीयदृष्टे रिपौ समदृशा बधिरत्वयोगः ॥
चापस्थवक्रशनिहृद्गवाक्पतौ ज्ञे शुक्रान्विते च रिपुयुक्तजपूर्णविष्वोः ॥ १४ ॥

अथ कर्णदोषानाह–सौम्य इति । षष्ठेशे बुधे षष्ठांतगे

शनिना शत्रुदृष्ट्या दृष्टे तदा बधिरः स्यात् । पूर्णेंदुः सभौमः षष्ठस्थः स्यात्तदापि बधिरो भवेत् ॥ १४ ॥

नक्तं बुधे रिपुगृहे सिते च व्योमसंस्थिते ॥
उच्चैः स्वरेण शृणुते श्रवणे दक्षिणोत्तरे ॥ १५ ॥

नक्तमिति । रात्रौ जन्म षष्ठस्थो बुधः स्यात्तदोच्चस्वरेण वामकर्णे शृणोति एवंविधे शुक्रे दशमस्थे वामकर्णे दीर्घस्वरेण शृणोति ॥ १५ ॥

## अथ जिह्वादोषाः ।

ज्ञे कर्क्यालिझषगे तरणेरधःस्थे
चंद्रेक्षिते रिपुपताविह पापदृष्टे ॥
वर्धिष्णुचंद्रमसि भौमयुते च लग्ने
गुंगस्वरोऽरिपबुधे रसनाविनाशः ॥ १६ ॥

अथ जिह्वादोषमाह—ज्ञ इति । ज्ञे बुधे कर्कवृश्चिकमीनस्थे सूर्यादधःस्थे चंद्रेक्षिते गुंगस्वरः स्यात् । षष्ठेशे बुधे निःशब्दराशौ पापदृष्टे गुंगः स्यात् । आपूर्यमाणे[१] चंद्रे सभौमे लग्नस्थे गुंगः भवति । षष्ठेशे बुधे लग्नस्थे पापदृष्टे गुंगः भवति । बुधज्ञानीत्येकभागस्थौ क्रूरदृष्टौ चेज्जिह्वानाशः भवति ॥ १६ ॥

सोमात्मजे शनिगृहे धृतगद्गदोक्ति-
र्मार्गस्थितेऽप्यथ सिते दिवि लड्डरोक्तिः ॥

---

१ आपूर्यमाणे वर्धनशीले इत्यर्थः ।

ज्ञकोडयोः समदृशा ७ कफवाक्तथैक-
भागस्थयोरशुभयो रसनाविनाशः ॥ १७ ॥

सोमात्मजे इति । बुधे शनिगृहे सति गद्गदवाग्भवति । बुधे नवमगे शुक्रे दशमस्थे सति लल्लरोक्तिः भवति । बुधः शनिना सप्तमदृशा दृष्टस्तदा कफनलल्लरोक्तिः स्यात् । तथैक-भागस्थयोः शुभाशुभयोः रसनाविनाशो भवेत् ॥ १७ ॥

अथ कुब्जदोषाः ।

आद्येऽतिमेऽथ रविजे शशिनि प्रयाते
क्रूरेक्षिते च सहजे स्थितवत्यमुत्र ॥
भूस्थार्कजोपरिगतेऽथ विलग्ननाथे
वक्राल्पराशियुजि भूतनये च कुब्जः ॥ १८ ॥

अथ कुब्जदोषानाह—आद्येऽतिम इति । चंद्रेऽल्पाद्यगते तस्माद्द्वितीयराशौ प्रथमभागे शनौ क्रूरदृष्टे तदा कुब्जः स्यात् तथा तृतीयेऽमुत्र अमुष्मिन् चंद्रे स्थिते चतुर्थगः शनिः तस्योपरिगे लग्नेशे सति कुब्जः । तथा वक्राल्पराशौ मीन-मेषौ तयोर्लग्नेशे भौमे सति कुब्जः भवति ॥ १८ ॥

अथ कुष्ठयोगः ।

कुष्ठ्यर्कनिर्गतविधौ च शनीत्थशाले
मेषे वृषेऽथ शनिभौमयुते सशोकः ॥

चंद्रारमंदसितसेवितवारिभेषु
क्रूरार्दितेषु पुनरस्ति सलूतकुष्ठम् ॥ १९ ॥

अथ कुष्ठयोगानाह–कुष्ठयेति । चंद्रसूर्यान्निःसृत्य द्युतिहीनः यावत् शनिना सहेत्थशाली शुभदृग्योगं विना आयाति तदा कुष्ठी । मेषे वृषे वा चंद्रः शनिभौमाभ्यां युक्तः स्यात्तदा सशोफः कुष्ठी भवति । चंद्रभौमशनिशुक्रेषु क्रूरार्दितेषु जलराशिस्थेषु सत्सु सजलनीलकुष्ठं भवति । चंद्रभौमशनिशुक्राः कर्कटवृश्चिकगतास्तदा लूतकुष्ठम् ॥ १९ ॥

शुक्रे वेज्ये षष्ठपे पापदृष्टे शोफो वक्रेऽन्त्ये शनौ गुप्तदोषः ॥ षष्ठेऽन्त्ये वा भूमिपुत्रार्कियोगे सौम्यादृष्टे गंडमालाव्रणाद्यम् ॥ २० ॥

शुक्रे इति । गुरुः षष्ठेशः शुक्रो वा पापदृष्टः चेत् मुखे शोफो भवति । द्वादशस्थे शनौ सति गुप्तदोषी भवति गुप्तस्थाने कुष्ठम् । शनियुक्ते भौमे षष्ठे द्वादशे वा शुभदृष्टिहीने सति उभौ उभयत्र वा गंडमालाव्रणाद्यं वाच्यम् ॥ २० ॥

सितशशियुजि वारिपांडुकुष्ठी सममशुभैरिह खर्जुरंकर्केऽब्जे ॥ अजमृगजलगार्किदृक्पदस्थे वपुषि च सहमे च खर्जुकुष्ठम् ॥ २१ ॥

---

१ तत्फलपूर्वोक्तमित्याध्याहार्यम् ।

सितेति। चंद्रशुक्रौ सपापौ जलराशिगौ चेत्तदा श्वतकुष्ठम्। क्रूरयुतचंद्रे नवमगे सति तदा खर्जुकुष्ठम्। मेषमकरजलराशिगः शनिः जलराशिगं चंद्रं पश्यति युता वा स्यात्तदा खर्जुकुष्ठम्। तनौ लग्ने पुण्यसहमे जलराशिस्थे मेषमकरजलराशिगे च यदा शनिः पश्यति तदा खर्जुकुष्ठ भवति ॥ २१ ॥

## अथ मतिमांद्यदोषः।

भूमा भूमिसुतोऽर्कतुर्यगदृशा लग्नांतरार्क्य-ञ्जयोर्ज्ञस्याशेषदृशा बुधार्कजयुतौ लग्ने कुजक्षुद्दृशा ॥ चंद्रार्कांतरसूर्युतौ च सितगौ लग्नाधिकृत्यंबरे मंदेऽस्ते च बुधेक्षितेऽब्जकुजयोर्लग्नेऽथ धीविह्वल ॥ २२ ॥

अथ मतिविह्वलयोगानाह–भूमाविति। भौम चतुर्थस्थ सूर्यः शत्रुदृशा पश्यति तदा धीविह्वलो भवति। चंद्रशनी लग्ने बुधः पूर्णदृशा यदा पश्यति तदा योगः। बुधशनी लग्ने भौमेन सप्तमदृशा यदा दृष्ट तदा योगः। भौमः सूर्यचंद्रमोभ्यां साकं एकेनैसराफी एकेनेत्थशालः स्याचद् योग[१]। लग्ने चद्रोऽधिकारी शनिः दशमे सप्तमस्थे बुधदृष्टे योगः। सप्तमस्थऽर्के भौमेन् मूसरीफिते योगः। अय च समौमे चंद्रे लग्नसप्तमे बुधः तदा धीविह्वलः भवति ॥ २२ ॥

---

१ अत्र योग इत्यनेन मतिहीनयोग इत्यवगतव्यम्।

पूर्णेंदौ रविनंदनान्मुसरिफे भौमाच्च सूर्येऽ-
स्तगे क्रूरे लग्नतदीशदर्शिनि शुभा दृष्ट्या च
यः स्यात्तनौ ॥ अह्नयर्कौ निशि चंद्रमास्त-
दधिपस्याशेषदृष्ट्या द्वयोः शुक्ले चापझप-
स्थमिंदुमवनीपुत्रे च पश्यत्यधीः ॥२३॥

पूर्णेंदाविति । पूर्णचंद्रः यदा शनिना सहेसराफं करोति तदा योगः । सप्तमस्थेऽर्के भौमेन मूसरीफिते सति योगः । क्रूरयुतं लग्नं लग्नेशं च यदा क्रूराः पश्यंति यश्च शुभदृष्टिहीनः तदा योगः । दिवा जन्मनि सूर्यं सूर्यराशीशं च क्रूरः पूर्णदृशा पश्यंति चेद् योगः रात्रौ जन्मनि चंद्रं चंद्रराशीशं च क्रूरः पूर्णदृष्ट्या पश्यति चेद्धीविह्वलः शुक्लपक्षे च मीनस्थं चंद्रं भौमः पश्यति तदा योगः सभौमचंद्रलग्ने अथवा भौमेन रिपुदृशा चंद्रे दृष्टे योगः ॥ २३ ॥

### अथ पातकयोगः ।

क्षीणेऽस्ते गतदर्शपर्विंतिथिपा लोके शनौ
पातकी निर्बुद्धिश्च तनौ हिमांशुकुजयोर्द्यूने-
स्थिते चासिते ॥ नीचे ज्ञे वपुषि द्व्यूनेऽब्ज-
कुजयोः केंद्रे च लग्नेश्वरे तस्मान्मूसरिफे च
चंद्रबुधयोर्लग्नेशसंयुक्तयोः ॥ २४ ॥

अथागघातदोषानाह–शनीसराफेति । शनीसराफे चंद्रे कंपाच्छूलाच्च पक्षाघातो भवति क्षीणेंदौ शनीसराफे घातः । चंद्रोऽस्तंगतः शनिना दृष्टः तदा कफात् घातः । षष्ठः पापः षष्ठेशः पापपीडितो गुरुदृष्टिहीनः स्यात् तदा घातः स्यात् २६

अथांगशूलमाह ।

षडंत्यंगार्किभौमयोर्बुधोऽशुभार्दिते रवौ ॥
विधौ च भानुभस्थिते सशूलमंगजा रुजः ॥२७॥

अथागशूलदोषमाह–षडंत्यगौ शनिभौमौ यदा तदा सशूलागपीडा । रात्रौ जन्मनि अशुभार्दितेऽर्के भूम्यधःस्थे योगः । भानुभस्थे चंद्रे पापार्दिते योगः ॥ २७ ॥

चंद्रे दग्धे शनिसुसरिफे केंद्रसंस्थे न दृष्टेऽ-
ह्न्यारेणांगजदरजगरुजः क्रूरमध्ये च केंद्रे ॥
मार्तंडेंद्वोरपि पतितयोः संधिशूलं च शुक्रे
मंदाक्रांते वपुषि जघने धातुपापाणिका रुक् २८

चंद्र इति । दग्धे चंद्रे शनेसुसरिफे संधिशूलम् । रात्रिजन्मनि दग्धे चंद्रे केंद्रस्थेन शनिना दृष्टे संधिशूलम् । अह्नजन्मनि दग्धे चंद्रे भौमदृष्टे योगः । लग्नभागतुलाभागयोः क्रूरयोर्मध्यगते केंद्रगे चंद्रे सति योगः। सूर्येंद्वोः पतितस्थानस्थयोः षष्ठात्यगयोर्योगः । मंददृष्टे शुक्रे लग्ने सति पापाणिको रोगः ॥ २८ ॥

---

१ अत्र प्रकरण योग इत्यननागशूल्योग इत्यर्थोऽवसेयः ।

पष्ठस्थपष्ठाधिपतेश्च धातोस्तद्दृष्टखेटस्य बलानुसारात् ॥ स्निग्धोष्णशीतादिभवा भवंति संधौ रुजोऽगस्य यदंशगोऽसन् ॥ २९॥

पष्ठेति । पष्ठस्थपष्ठाधिपौ अंशांशपौ च तेषां मध्ये यो बली तस्य धातुजा शीतोष्णभवा पीडा वाच्या । योगकर्ता ग्रहः यस्मिन्यस्मिन्नंगे मेषादिमारभ्य शीर्षं श्रीवेतिगणनया यस्मिन्नंगे पतितस्तदंगे पीडा वाच्या । दृश्यादृश्यचक्रार्धे वामदक्षिणांगानीति बोध्यम् ॥ २९ ॥

अथ हृदयोदरदोषः ।

क्रूरित्ते रिपुपतौ दिननाथे त्व्ययथोरुपतितेषु शुभेषु ॥ मंदभौमगुरुभिर्भुवि पापैः कृष्णपित्तविकृतेर्व्रणमह्नि ॥ ३० ॥

अथ हृदयोदरदोषानाह–क्रूरेति । पष्ठेशे सूर्ये क्रूरित्ते सति शुभाः पतितस्थानस्थाः स्युस्तदा योगः । शनिभौमगुरवः चतुर्थगाः नीचशत्रुभगताः पापैर्दृष्टाः दिवा जन्म च तदा कृमिपित्तादिव्रणः स्यात् ॥ ३० ॥

कुजसकलदृशार्दिते सुरेज्ये दिनजनने च धरात्मजे विनष्टे ॥ अशुभयुजि रिपौ प्रभौ शुभार्तावलिगखौ हृदि चोदरे च शूलम्॥ ३१॥

कुजेति । गुरौ सप्तमचतुर्थदशमगे भौमेन च द्वादशभागांतरदृष्ट्या दृष्टे सति हृदि शूलम् । दिवा जन्मनि पीडिते गुरौ चतुर्थे वा नष्टेन भौमेन सप्तमेन दृष्टे योगः । षष्ठेशे पापयुते शुभाः पीडितास्तदा योगः । वृश्चिके सूर्ये तदा योगः ॥ ३१॥

षष्ठेश्वरे शशिनि पापहते विभौमे
लग्नेश्वरे द्युनगतेऽप्यथवार्कपुत्रे ॥
दुग्धेऽवनौ च पतिते इति लग्नपे वा
प्लीहोष्णशीतजरुजो बहुले निशायाम् ॥ ३२ ॥

षष्ठेश्वर इति । षष्ठेशे शशिनि पापहते शुभदृष्टिरहिते प्लीहरुक् । लग्नेशे सप्तमगे क्रूरदृष्टे शुभदृष्टिहीने योगः । दिवा जन्मनि दग्धशनौ चतुर्थे सति योगः । कृष्णे रात्रिजन्मनि लग्नेशे दग्धे पतितस्थे योगः ॥ ३२ ॥

सपापभूभागगतेऽथ भूस्थिते
यमार्दितेऽर्के कफरुक्क्फाद्विधौ ॥
सितेऽरिपेऽग्नौ सशनौ च पित्ततः
समस्ततुर्येक्षणतोऽस्य वा भवेत् ॥ ३३ ॥

सपापेति । सपापेऽर्के चतुर्थराशिनवमांशगे प्लीहरुक् । शनिना पीडितेऽर्के चतुर्थे कफरोगः । सपापे चंद्रे चतुर्थराशि-

---

१अत्र योगः इत्यनेन हृदयोदरदुःखं इति बोध्यम् । २ अत्र योग इत्यनेन प्लीहरुग्योग इत्यर्थः ।

नवांशगते कफाद्रोगः । चतुर्थगश्चंद्रः शनिना पीडितस्तदा कफा-
रोगः । षष्ठेशे शुक्रे मेषसिंहधनुःस्थे शनियुते तादृशे शुक्रे
शनिना समसप्तमदृशा वा तुर्यदृशा दृष्टे योगः ॥ ३३ ॥

लग्नेऽरीशे वक्रभस्थे च लग्नाधीशे वक्रर्क्षे
द्वयोर्मंददृष्ट्या ॥ रंध्रे शुक्रक्रोडयोः क्रूरिते-
ऽरौ तन्नाथे च द्यूनगे तुंदरोगः ॥ ३४ ॥

लग्नेति । विषमोदयराशिस्थिते षष्ठेशे लग्ने लग्नेशे विषमो-
दयराशौ सति द्वे मंदः पश्यति तदा तुंदरोगः । शनिशुक्रा-
वष्टमगौ यदा तदा तुंदरोगः ॥ ३४ ॥

अथ पंढत्वदोषः ।

शुक्रे शनिना युक्ते दशमे रंध्रे च शुभदृशा
हीने ॥ मंदे षष्ठांत्यगते जलराशौ पंढता
भवति ॥ ३५ ॥

अथ पंढत्वयोगानाह—शुक्रेति । शनिना युक्ते भृगौ दशमे
शुभदृष्टिहीने पंढः । एवंविधो शुक्रेऽष्टमे पंढः । जलराशिगते
मंदे षष्ठे द्वादशे शुभदृष्टिहीने पंढः ॥ ३५ ॥

बुधसितदृशा भूमौ सूर्ये स्वर्ग्रहणे शने-
र्भृगुजशशिनोरूर्ध्वारोहे कुजेऽब्जसितेक्षिते ॥
रविशनिसितज्ञैकास्थित्या हरिभे रवौ दिवा
वपुषि च सिते शिश्नच्छेदोऽथवाल्परतिर्भवेत् ३६

बुधसितदृशेति । शनैः सूर्यश्चतुर्थो बुधशुक्रदृष्टः सूर्यग्रहणे जन्म तदा लिंगच्छेदः । अथवाल्परतिः । चंद्रशुक्रयोर्द्वादशैकादशगयोः सतोः भौमे च शुक्रचंद्रेक्षिते तदा लोहेन वृषणछेदः। सूर्यज्ञशनिशुक्राश्चैकस्था गुरुणा अदृष्टाः तदा योगः । सिंहे रवौ लग्ने शुक्रः दिवा जन्म तदा शिश्नच्छेदः ॥ ३६ ॥

स्त्रीपुंग्रहो स्त्रियो भागे सूर्याग्रेऽस्तांशगः पुमान् ॥
तयोरूर्ध्वं निजांशश्चेत्क्षिपेत्ताच्छिन्नमेढ्रकः ॥ ३७ ॥

स्त्रीपुंग्रहाविति । स्त्रीपुंग्रहौ स्त्रीराशौ सूर्याद्द्वितीये अस्मिन्नेव योगेऽस्तंगतेन पुरुषग्रहेण दृष्टे तदा च्छिन्नमेढ्रकः स्यात् । शुभः पुरुषग्रहः स चेन्निजौजः क्षिपेत्तदापवादः ॥ ३७ ॥

वक्रर्क्षगे भृगुसुतेऽथ मदस्थितेऽत्र
लग्नस्थलग्नपदृशा च शनींदुयोगे ॥
भुव्यार्किहृद्दगभृगौ च रतेषु नार्यो
द्वेष्यः सितर्क्षगविधौ दयितोऽपरेषाम् ॥ ३८ ॥

वक्रर्क्षग इति । शुक्रे विषमोदयराशौ सति तदाऽल्पवीर्यः[१] शुक्रे सप्तमगे लग्नस्थेन लग्नेशेन दृष्टेऽल्पवीर्यः । शनिचंद्रौ चतुर्थे स्थाने चेदल्पवीर्यः । शनिहद्दागते शुक्रे योगः । शुक्रराशौ चंद्रे सति योगः ॥ ३८ ॥

---

१ अत्र प्रकरणे योग इत्यनेन अल्पवीर्यत्वयोग इत्यर्थो बोध्यः ।

अथ कामातुरयोगः ।

शुक्रे प्रसूतिगमनान्मिथुनापरार्धे
स्वांशे हरिप्रथमकार्धगते कुगेहे ॥
कामातुरं जनयते झषगे तथास्मिन्
षष्ठेश्वरे कुजहते च मृताल्पसूतिम् ॥ ३९ ॥

अथ कामातुरयोगमाह—शुक्रेति । शुक्रोऽवंध्यराशौ ५।६।३ स्थितस्तदा कामातुरः अल्पप्रजश्च । शुक्रे मिथुनोत्तरार्धे स्वांशके कामातुरोऽल्पप्रजश्च शुक्रे । सिंहस्य पूर्वार्धे कुगेहे षडष्टव्ययगे स्थिते कामातुरः । षष्ठेशः शुक्रो भौमहतस्तदा कामातुरः मृतप्रजोऽल्पप्रसवश्च ॥ ३९ ॥

अथार्शोदोषः ।

भूमीपुत्रे शशिरवियुते दर्शपूर्णेष्टकाले
मंदेऽत्यस्थे कुजतनुभुजोर्योगतोऽस्ते दृशा वा ॥
भौमे चालौ गुरुसितदृशा वर्जितेऽतीव लग्ने
मूर्तौ मंदे कुजयुजि मदे सम्यगर्शोविकारः॥ ४० ॥

अथार्शोदोषानाह—भूमीपुत्रेति । भौमे सूर्ययुते वा चंद्रयुते गतपर्वान्तलग्ने अर्शोदोषः स्यात् । शनौ द्वादशे पापदृष्टे योगेः लग्नेशे भौमयुते तदार्शोदोषः । लग्नेशो भौमेन नवमदृशा यदा

१ अत्र प्रकरणे योगः इत्यनेन अर्शोदोष इत्यवगन्तव्यम् ।

दृष्टः स्यात्तदा योगः । लग्ने भौमे वृश्चिके लग्ने गुरुसितदृशा हीने योगः । लग्ने शनौ सप्तमे भौमे अर्शोविकारः ॥ ४० ॥

क्रूरे विनाशनाथे मदगे शुभदृष्टिवर्जितेऽशोरुक् ॥ अह्न्यस्तगृहे मंदे चालौ पुण्ये सभूमिसुते ॥ ४१ ॥

क्रूर इति । क्रूरितेऽष्टमेशे सप्तमगे शुभदृष्टिहीनेऽर्शोरुक् दिवा जन्मनि सप्तमे शनौ सति योगः । सभौमे पुण्यसहमे वृश्चिकगे सत्यर्शोरुक् ॥ ४१ ॥

अथ व्रणदोषः ।

भूपुत्रे गुरुसितदृष्टिवर्जितेऽलौ
जायंते व्रणपिटकास्तनौ विशेषात् ॥
भुव्यस्मिन्नथ च तदंशके सपुच्छे
मंदे चास्तयुजि तथा द्वयोर्व्ययेऽरौ ॥ ४२ ॥

अथ व्रणयोगानाह–भूपुत्रे इति । वृश्चिकस्थे भौमे लग्नगे गुरुसितदृष्ट्या वर्जिते व्रणपिटकाः स्युः । वृश्चिके भौमे चतुर्थगे तन्नवांशे वा योगः । केतुयुते मंदे सप्तमगे व्रणादिः । शनिभौमयोः षष्ठात्ययगयोर्योगः ॥ ४२ ॥

१ अत्र प्रकरणे योगः इत्यनेन व्रणपिटकयोगः इति बोद्धव्यम् ।

## अथ दद्रुदोपांडदोषौ ।

स्निग्धभे धनगते रजनीशे भूमिभागगतभा-
स्करियुक्ते ॥ दद्रुणो भवति भौमसिताब्जै-
रंडवृद्धिरलिगे मृतिभागे ॥ ४३ ॥

अथ दद्रुदोपांडदोषानाह । तत्रादौ दद्रुरोगमाह-स्निग्ध-
भेति । स्निग्धराशयः कर्कवृश्चिकमीनास्तेषु गतश्चंद्रः सप्तमभूमि-
नवांशगतः शनियुक्तश्चेद्दद्रुर्भवति । अंडवृद्धियोगः । चंद्र
शुक्रभौमाः वृश्चिकगताः मृतिराशिनवांशगताश्च तदा अंड-
वृद्धिः ॥ ४३ ॥

## अथ वामनत्वदोषः ।

मंदतुर्यदृशि राश्यपरांशे पूर्वभागधुरि वामृ-
तधाम्नि ॥ खर्वता शुभदृशा रहिते
स्याल्लग्नपेऽल्पतरराशिगते च ॥ ४४ ॥

वामनत्वयोगानाह-मंदेति । चंद्रेऽल्पतरराशिगेऽन्त्यभागे
शनिना चतुर्थदृशा दृष्टे तदा खर्वता । एवंविधे चंद्रे राशि-
प्रथमभागे शनिना तुर्यदृशा दृष्टे खर्वता । लग्नेशेऽल्पतरराशिगे
शुभदृष्टिहीने च खर्वता स्यात् ॥ ४४ ॥

## अथ खल्वाटयोगः ।

हरिधनुरलिकन्यकासु लग्ने सपलितशिराः

कुजदृग्विधौ कुलीरे ॥ सुकृतसहमपे च कर्क-
सिंहालिमृगगते शुभदृष्टिमंतरेण ॥ ४५ ॥

अथ खल्वाटयोगानाह–दरीति । सिंहधनुःकन्यालग्नेषु सत्सु खल्वाटः । पुण्यसहमपे मेषकर्कसिंहवृश्चिकगे मृगगे मकरगे च शुभदृष्टिराहते खल्वाटः ॥ ४५ ॥

## अथ मुखदुर्गंधयोगः ।

शनिगृहे शनिदृग्गतोऽपि वा भवति चंद्रगृहे-
ऽप्यथ भार्गवे ॥ अजगते वपुषींदुगते बुधे
रिपुपतौ च मुखस्य विगंधता ॥ ४६ ॥

अथ मुखदुर्गंधयोगमाह–शनिगृह इति । शनिगृहे शनिदृग्गते वा शुक्रे मुखदुर्गंधः । अथवा चंद्रगृहे कर्कगे शुक्रे मुखदुर्गंधता । सचंद्रे शुक्रे मेषगे लग्ने सति मुखदुर्गंधः । षष्ठेशे बुधे मुखदुर्गंधः ॥ ४२ ॥

## अथ शरीरकार्श्ययोगः ।

क्षीणे विधौ विबलता ह्यशुभे सराफे
चार्के तदास्तंतनुगे शनिदुष्टदृष्टे ॥
मेषेऽब्जमंदयुजि वाऽनृजुभाजि लग्ने
लग्नांतिमेऽशुभमति केंद्रवियुक्तभौमे ॥ ४७ ॥

अथ शरीरकार्श्ययोगानाह–क्षीणेति । क्षीणे चंद्रे लग्नगे पापे सराफे सति निर्बलता स्यात् । सूर्यसप्तमगे शनिना

सप्तुदृशा दृष्टे कार्श्यम् । शनिचंद्रौ मेषभे यदि तदा कार्श्यम् । मेषभोदयराशिगते लग्ने कार्श्यम् । सूर्ये लग्ने द्वादशगे केंद्रहीने भौमे कार्श्यम् ॥ ४७ ॥

चंद्रेऽन्त्यगेऽगसहमे च समग्रदृष्ट्या।
भौमेक्षिते भवति शूलरुजोऽगभंगः ॥
चंद्रेश्वरे त्रुटति भादिति कीर्तितेऽगे
चंद्रेऽगगेऽसृजि मदे द्वितये तनौ वा ॥ ४८ ॥

अथांगभंगदोषमाह—चंद्र इति । सचंद्रेऽगसहमे द्वादशगे भौमेन समग्रदृशा दृष्टे शूलेनांगभंगः । चंद्रेश्वरे द्वादशगे भौमदृष्टे योगः । सभौमे चंद्रे लग्नगे शीर्षग्रीवेत्यादिगणनया यस्मिन्नंगे पतति तस्मिन्नंगे पतिते तस्मिन्च्छेदः । द्विस्वभावलग्ने चंद्रः सप्तमे भौमश्च स्यातां तदांगच्छेदः ॥ ४८ ॥

कुजबुधगुरुसौरिभिः समेतैरुशनसि तुर्यगतेऽह्नि पाणिहानिः ॥ व्ययरिपुगे शनौ च पापदृष्टे शनिकुजयोऽस्तमसो मुखे खगेऽरौ ॥४९॥

कुजेति । कुजबुधशनिगुरवः एकराशिगताः शुक्रे चतुर्थगते दिवा जन्मनि च पाणिहानिः । षष्ठांत्ये शनौ पापदृष्टे योगः । शनिभौमौ राहुमुखे सूर्यः षष्ठे यदा तदा योगः ॥ ४९ ॥

---

१ अत्र योगः इत्यनेनांगभंगयोग इत्यभ्युपगंतव्यः । २ अत्र पाणिपादहानिः इति योगपदार्थः ।

पुण्येशजीविपतयो मृगकुंभमीने
जंघाक्षतिः शशिनि पूर्णतिथेश्च षष्ठे ॥
भौमान्विते शनिकुजेंदुगते व्यये च
यष्ट्या चलत्यशुभदृक्तनुपाश्रिते च ॥ ५० ॥

पुण्येशोति । पुण्येशजीवितपतयः मकरकुंभमीने यदा तदा जंघाक्षतिः । गतपर्वातलग्नात्षष्ठे चंद्रे भौमयुते जंघाक्षतिः । शनिचंद्रभौमा द्वादशगताः यदा तदा च यष्टिं गृहीत्वा चलति । लग्नेशो व्ययगः पापयुतदृष्टस्तदा योगः ॥ ५० ॥

षष्ठे स्वहृद्गे भौमे जंघादोषोऽतिवक्रभे ॥
शनाविति महाबाधा रात्रौ जन्म भृशं भवेत् ५१

षष्ठे इति । स्वहृद्गते भौमे षष्ठगे वक्रभे मीनमेषस्थे जंघाक्षतिः । एवंविधे शनौ षष्ठगे महाबाधा रात्रौ जातश्च विशेषेण खंजः ॥ ५१ ॥

अंगेषु मेषादिषु येषु पापाः कुर्वंति दोषं किल
तेषु दोषः ॥ व्योम्नोऽपि पश्येदिति देहभागं
पुरेव दुर्वीथसवाक्यमेतत् ॥ ५२ ॥

अंगेष्विति । मेषादिमारभ्य शीर्षे ग्रीवेतिगणनया यत्रांगे पापस्तदंगे दोषः दशमसकाशाद्वा शीर्षग्रीवेति गणनाक्रमः ५२

केषांचिदेतन्मतमामयार्थे चक्रस्य पक्षद्वयमंगभागाः ॥ ये भूमिभागाः खलु दक्षिणांगान्याकाशभागा अपि वामकानि ॥ ९३ ॥

केषांचिदिति । केषांचिन्मतं रोगार्थं भचक्रस्य भागद्वयं कृत्वा तत्र लग्नात्सप्तमभुक्तांशावधि दक्षिणभागः सप्तमभोग्यांशाल्लग्नभुक्तांशावधि वामभागः ॥ ९३ ॥

अथ दोषोत्पत्तिसमयः ।

येयैः क्रूरितमंगसादसहमं तैलेंग्नखांतःस्थितैर्बाल्ये च नभस्मरांतरगतैर्दोषोद्भवो यौवने ॥ वार्धक्ये न तु तुर्यमध्यपतितैरस्ते च तुर्यांतरे संप्राप्तैर्विपदोऽवसानसमये पूर्वोक्तभागाश्रयः ९४

इति कर्मप्रकाशिकायां मनुष्यजातके द्वादशो दोषाधिकारः ॥ १२ ॥

अथ दोषोत्पत्तिकालावधिमाह—येयैर्ग्रहैः पुण्यं क्रूरितं तैर्लग्नदशमगैर्बाल्ये तैः सप्तमदशमगैर्यौवने तैर्लग्नचतुर्थगैर्वार्धक्ये तैः सप्तमचतुर्थगैरंते विपदः स्युः ॥ ९४ ॥

इति कर्मप्रकाशिकावृत्तौ द्वादशो दोषाधिकारः ॥१२॥

## अथ प्रकृत्यधिकारः ।

हद्दाप्रमाणा प्रतिहद्दमब्दसंख्या भवेज्जन्मनि
सर्वभेषु ॥ हद्दाधिपो योऽत्र च यस्य तेजः
स तत्पदस्थप्रकृतिर्नरः स्यात् ॥ १ ॥

अथ प्रकृत्यधिकारः । हद्देति । जन्मसमये यस्य ग्रहस्य हद्दास्ति तस्य भोग्यांशमित्या वर्षं ज्ञेयं अत्र यः हद्दपः तदुपरि यस्य ग्रहस्य तेजः पतति तत्प्रकृतिर्नरो भवेत् ॥ १ ॥

उदाहरणम् ।

युग्मे विलग्ने किल हद्दभागा वेदायुताः
खश्रुतिभिः कलाभिः ॥ तत्संख्यकाब्दानि
सहाष्टमासैश्चत्वारि यातानि दशेश्वरो ज्ञः ॥ २ ॥

तत्रोदाहरणं दर्शयति–युग्मेति । मिथुनलग्नं १ । २० तत्र हद्दा बुधस्यांशाः तत्र भुक्तांशादिः १।२० भोग्यांशादिः ४।४० तत्र भोग्यपरिमित्या बुधस्य वर्षादिदशा ४ कला ५ भक्ता-लब्धं मासादिः ८।१ बुधः ततः फलम् ॥ २ ॥

तद्धातुना शीघ्रवचाः शिशुः स्याद्बाल्येऽपि
जिह्वास्फुरणं दृढत्वम् ॥ भागद्वयोर्ध्वं पतितं
च तेजः कुजस्य तद्धातुफलं तदूर्ध्वम् ॥ ३ ॥

---

१ भोग्यांशस्य मित्या गणनेनेत्यर्थः ।

तद्धातुनेति सुगमम् । दृष्टभोग्यांशमारभ्य अंशद्वया-दूर्ध्वं भौमस्य तेजः पतितं तेन वर्षद्वयादूर्ध्वं वर्षमेकं भौम-धातुफलं शरीरे शूलं तापः लोहघातः । स राशियस्मिन्नंगे तत्र ज्ञातव्यम् । अत्र प्रसंगाद्ग्रहाणां धातुजस्य रूपाण्यु-क्तानि सुगमत्वान्न प्रकाशितानि । अथेदमवधेयं जन्मका-लीना ग्रहाः स्वं स्वं धातुजं च फलं स्वदशायां प्रयच्छंति दृष्टारोऽपि तथैव फलं प्रयच्छंति ॥ ३ ॥

सर्वैः स्वधातुसदृशं खलु जन्मकाले
दत्ते ग्रहैः फलमसौ स च येन दृष्टः ॥
लग्नेऽम्बरेऽथ सबलेऽप्यधिकारयुक्ते
जन्मैकरूपमिह दाप्रमृते परस्य ॥ ४ ॥

सर्वे इति। जन्मसमये यो दशाधिपः स चाधिकारी वा लग्ने दशमे वा बलवान् शुभेक्षितः तदा स्वधातुजं फलं स्वदशावधि-यावद्दृष्टिस्तावत्फलं प्रयच्छति ॥ ४ ॥

खे भूमिजेऽतिकपटः कटुकश्च हिंस्रः
शुक्रेऽन्यदृग्युजि घृणी मधुरत्वभाषी ॥
अन्येक्षिते तदनुगं फलमिश्रभावं
तद्धातुगं फलमिहादधाति यो बलाढ्यः ॥ ५ ॥

खे भूमिजे इति। स्पष्टार्थोऽयम् । यदा बहवो दृष्टास्तदा यो बली तस्य पूर्वं फलम् । यदि मित्रामित्राणां दृष्टिस्तदा तस्मि-स्तस्मिन्काले तत्फलं ददातीति ॥ ५ ॥

शौर्ययोगानाह ।

लग्ने खेऽथ कुजेऽधिकारिणि दृढे रात्रौ रण-
ग्रामणीः शूरोऽहंकृतिमान्दिवा तु कुपितो
रौद्राननः पातकी ॥ जीवे चेतिबलाधिके
नरपतिश्छत्रांकितः कीर्तिमांश्चंद्रे चेज्यसिते-
क्षिते युधि दृढः सर्वे स्वहर्षे सुखी ॥ ६ ॥

लग्ने इति। लग्ने दशमे वा कुजोऽधिकारी सबलः रात्रिजन्मनि सति रणश्रेष्ठः दिवा जन्मनि एवंविधे कुजे क्रुद्धमुखः । एवंविधे गुरौ बलाधिक्ये राजचिह्नांकितः । एवंविधे चंद्रे स्वहर्षबलिनि गुरुशुक्रेक्षिते युद्धे दृढः । अथ सर्वे ग्रहाः स्वहर्षपदस्थास्तदा संग्रामदृढः ॥ ६ ॥

मेषे रवौ चावनिजे दृकाणे पुरःसरः संयति
लब्धकीर्तिः ॥ मदृक्सादे कुजभास्थितेऽस्य
हृद्दस्थकेंद्रेऽधिकभोज्यदृष्टे ॥ ७ ॥

मेषे इति। मेषस्थेऽर्के भौमे द्रेष्काणे हद्दायां वा तदा संग्रामे पुरःसरः लब्धकीर्तिश्च । शौर्यसहमे कुजग्रहे हृद्दगे वा केंद्रस्थे-ज्यदृष्टे शौर्यवान् ॥ ७ ॥

अथ कातरयोगः ।

भौमे परक्षेपतिते स्वगते च नीचे
लग्नाद्दशा भवति संगरकातरः स्यात् ॥

नक्तं शनौ व्योम्नि च शौर्यसद्मे
सूर्यांशुगेऽग्रे पतितेऽथ साक्ये ॥ ८ ॥

अथ कातरयोगानाह—भौमे इति । भौमेऽरिगृहस्थे पतितस्थे वित्तस्थे शनीक्षे वा लग्नमनीक्षमाणे तदा संगरकातरः युद्धभीतः स्यात् । रात्रिजन्मनि शनिर्दशमगस्तदा कातरः । शौर्यसद्मेऽस्तंगते सूर्यसहिते सूर्याद्द्वितीयगे शनिसहिते योगः॥८॥

अथ झकटयोगः ।

लग्ने शुभे निरधिकारिणि भूमिपुत्रे
मंदेक्षिते सुहृदि वाभ्युदिते बुधे च ॥
सूर्येऽथ चंद्रमसि भूसुतधाम्नि शुक्के-
ऽन्यत्रारगान्मुथशिले च कलिप्रियः स्यात् ॥ ९॥

अथ झकटयोगानाह—लग्ने इति । अधिकारहीने लग्ने सप्तमे वा शनिदृष्टे झकटकर्ता स्यात् । सूर्यान्निःसृते चंद्रे वा बुधचतुर्थगे शनिदृष्टे योगः । शुक्ले चंद्रे कर्कस्थे भौमयुतेत्थशालिते योगः । कृष्णे मेषवृश्चिकस्थे चंद्रे भौमेन युतेत्थशालिते योगः ॥ ९ ॥

शत्रुभे नीचभे भौमे वृषलग्नेऽथ संस्थिते ॥
क्रूरदृग्योगते लग्ने सौम्ये च झकटप्रियः ॥१०॥
रंध्रे सद्मसदीशे विलग्नेशेऽथ संस्थिते ॥
क्रूरदृग्योगते सौम्ये भवेज्झकटकर्मकृत् ॥११॥

भौमः शत्रुराशिस्थः नीचस्थः वृषस्थः लग्नस्थो वा तदा कलिप्रियः स्यात् । पुण्यसद्मपे लग्नपे वाऽष्टमस्थे पापदृग्युते शुभदृग्योगरहिते शकटकर्मठः स्यात् ॥ १० ॥ ११ ॥

## अथ क्षमायोगः ।

निःशब्दभेऽर्के कुजदृष्टियोगे खेचारसूया-
किषु चंद्रदृक्षु ॥ विलग्नपुत्रांबरलाभसादे
सूर्येंदुदृष्टे द्युनिशं क्षमावान् ॥ १२ ॥

अथ क्षांतियोगानाह–निःशब्देति । निःशब्दराशयः कर्कवृश्चिकमीनाः एषु स्थितोऽर्कः भौमदृष्टः स्यात्तदा क्षमावान् । शनिभौमसूर्याः उपरिगतं चंद्रं पश्यंति तदा क्षमावान् । लग्नपंचमदशमैकादशस्थितं पुण्यसद्मं सूर्याचंद्रमसौ पश्यतः तदा द्युनिशं अहर्दिवसं क्षमावान् ॥ १२ ॥

## अथ मुखरयोगः ।

चंद्रज्ञयोर्भौमसप्तमग्रदृष्ट्या क्षीणे विधौ चार-
युते कुगेहे ॥ लग्ने ज्ञभृग्वोद्युनगारदृष्ट्या
ज्ञाता नरः स्यान्मुखरो विलज्जः ॥ १३ ॥

अथ मुखरयोगः । चंद्रज्ञयोरिति । बुधचंद्रौ भौमेन सप्तमदृशा दृष्टौ तदा मुखरः स्यात् । क्षीणेंदौ भौमयुते षड्व्ययगते मुखरः । बुधशुक्रौ लग्नस्थौ सप्तमस्थेन भौमेन दृष्टौ तदा मुखरः ॥ १३ ॥

अथ लज्जायोगः ।

लग्ने गुरावचनिजेज्यदृशीह चंद्रे
सव्ये त्रिभागदृशि चास्य भवेच्च लज्जा ॥
हृद्दादृकाणयुजि शीतरुचौ च सौरे
लग्नेशभूमितनये द्युनगेज्यदृष्ट्या ॥ १४ ॥

अथ लज्जायोगानाह–लग्ने इति । गुरौ लग्नगते भौमदृष्टे सति लज्जावान्स्यात् । चंद्रे लग्नगे गुरुणा सव्यात्रिभागदृशा दृष्टे लज्जावान् । चंद्रः शनिहद्दाद्रेष्काणगो वा लग्ने गुरुणा दृष्टस्तदा लज्जावान् । सभौमे चंद्रे सप्तमगे गुरुदृष्टे साति लज्जावान् ॥ १४ ॥

अथ वाक्पटुसुभगकृपालुयोगः ।

खस्थे विधौ शनितुरीयदृशाथ मंदे
वित्तस्थिते शनिगृहे तरणौ च वाग्मी ॥
ज्ञे सूर्यचंद्रगृहगे प्रथितः सुहृच्च
चंद्रार्कयोर्झषगयोः सुभगः कृपालुः ॥ १५ ॥

अथ वाग्मियोगानाह–खस्थ इति । चंद्रे दशमगते शनिना तुर्यगतेन दृष्टे वाग्मी भवति । मंदे शनौ वित्तस्थिते द्वितीयगे सूर्ये मकरकुंभस्थे वाग्मी । दिवा जन्मनि बुधे सिंहगते रात्रौ कर्कगते सति प्रथितः सज्जनश्च स्यात् । चंद्रार्कौ मीनस्थौ चेत्प्रहासितमुखः सर्वदा हृष्टमुखः दयावांश्च स्यात् ॥ १५ ॥

## अथ कपटयोगः ।

सज्ञे कुजे कपटकृच्च बुधे बलाढ्ये
क्रूरान्वितेऽघ्ययुजि भूमिसुते तृतीये ॥
भूकेन्द्रपेऽथ नवमाधिपतौ च षष्ठे
मेषे बुधे कपटलेखकरो नरः स्यात् ॥ १६ ॥

अथ कापट्ययोगानाह–सज्ञ इति । सबुधे भौमे कपटकृत् । सबले बुधे पापयुते नवमे कपटकृत् । भौमे तृतीयगते शुभदृष्टिहीने कपटकृत् । चतुर्थभावस्वामिनि षष्ठगते सति योगः । नवमेशे षष्ठे सति योगः । बुधे मेषे योगः ॥ १६ ॥

## अथ मिथ्याभाषियोगः ।

अपररात्रकृताभ्युदये विधाववनिजाद्व्रजति
ज्ञमसत्यवाक् ॥ ज्ञकुजयोर्दरजैकगकेन्द्रयोर्वि-
तथवागपरं जयते जनम् ॥ १७ ॥

असत्ययोगानाह–अपरेति । कृष्णाष्टमीमारभ्य चतुर्दशीपर्यंतं यावज्जन्मकालीनचन्द्रः भौमान्निर्गत्य बुध प्रति व्रजति तदाऽसत्यवक्तृत्वम् । बुधभौमौ केंद्रगौ एकांशे भवतस्तदा योगः ॥ १७ ॥

## अथ हास्ययोगः ।

युत्यार्किभे ज्ञकुजयोर्जनहास्यकारी

वैहासिकोऽमरपतौ नृपभेऽर्कदृष्ट्या ॥
विस्मापयत्यरिदृशा पतितेंदुभृग्वो-
र्भौमज्ञयोर्मुथशिले खलु मंडिताभिः ॥ १८ ॥

युत्यार्कीति । बुधभौमयोर्युति शनिग्रहे मकरकुंभे जन-हास्यकारी स्यात् । अमरपतौ गुरौ प्रथमपञ्चमनवमरा-शिगे अर्थान्मेषसिंहधनराशिगे सूर्येण दृष्टे सति योगः । चंद्रशुक्रौ परस्परं यदा शत्रुदृष्ट्या पश्यतः तदा जनान्विस्मा-पयति । बुधभौमौ यदा परस्परेत्थशालितौ तदा योगः ॥१८॥

अथ द्रोहयोगः ।

खस्थे बुधे तुर्यगते च चंद्रे द्रोहात्परद्रव्यमु-
पाददाति ॥ कुजे तृतीयेऽथ बुधे सचंद्रे रिपौ
विलग्नाधिपतौ बुधे वा ॥ १९ ॥

अथ द्रोहयोगानाह–खस्थे इति । बुधे दशमगे चतुर्थे चंद्रे च द्रोही भूत्वा परधनापहरणं कुर्यात् । सचंद्रे कुजे तृतीयगे सति योगः । अथ सचंद्रे बुधे षष्ठस्थानस्थे सति अथवा लग्ना-धिपे सति योगः ॥ १९ ॥

अथ चौरयोगः ।

चंद्रज्ञारैः शुभदृशमृते केंद्रगैस्तस्करः स्या-
द्र्यने मंदे शशिकुजबुधैर्वीक्षिते तु प्रसिद्धः ॥

भौमे केंद्रे गुरुसितदृशा वर्जितेऽस्ते ज्ञभौम-
क्रोडैरिंदोरपि रिपुदृशा ज्ञारचंद्रार्कियुक्त्या॥२०॥

अथ तस्करयोगानाह—चंद्रज्ञारैरिति। चंद्रबुधभौमाः केंद्रस्थाः शुभदृष्टिहीनास्तदा तस्करो भवति । शनौ सप्तमस्थे चंद्रबुधभौमदृष्टे योगः । भौमे केंद्रस्थे गुरुशुक्राभ्यामदृष्टे योगः । शनिबुधभौमाः सप्तमस्थाः लग्नगतं चंद्रं पश्यंति तदा योगः । शनिबुधचंद्रभौमा एकराशिस्थास्तदा योगः ॥ २० ॥

अथ पारदारिकयोगः ।

द्यूनेऽथ खे सितबुधार्किषु चारभृग्वो-
स्तुर्येऽथ खे भृगुसुते शशिसौरिदृष्टे ॥
क्रोडारयोररिगयोर्निजवर्गभोमे
दृष्ट्या रवेः सकलया परदारगामी ॥ २१ ॥

अथ पारदारिकयोगानाह—द्यून इति । शनिबुधशुक्राः सप्तमे दशमे वा यदा तदा परदारगामी स्यात् । भौमशुक्रौ चतुर्थगौ तदा योगः। शुक्रे दशमगे शनिचंद्राभ्यां दृष्टे योगः। शनिभौमौ षष्ठस्थौ तदा योगः । भौमशुक्रौ स्वकीयवर्गस्थौ सप्तमदृष्टौ तदा योगः ॥ २१ ॥

अथ प्रसंगात्स्त्रियाः परपुरुषरतियोगः ।

भृग्वारौ शनिना ज्ञनोद्भवदृशा दृष्टौ सितः

क्रूरभे भौमे पश्यति खेऽमरेज्यभृगुजस्त्रैराशिकेशोरुदक् ॥ दुःस्थं पश्यति वा सितं सुरगुरुस्त्रैराशिकेशं कुजं शुक्रं पश्यति भूमिजेक्षितभृगुः खस्थैस्त्रिराशीश्वरः ॥ २२ ॥

अथ प्रसंगात्स्त्रियाः परपुरुषरतियोगानाह । शुक्रभौमौ शनिना सप्तमदृशा दृष्टौ तदा स्त्रियः परपुरुषरताः स्युः । शुक्रः क्रूरस्थाने स्थित्वा भौमं पश्यति तदा योगः । यदा शुक्रः त्रैराशिकस्वामी गुरुदशमस्थः भौमदृष्टः तदा योगः । दुष्टस्थानस्थं शुक्रं गुरुः पश्यति तदा योगः । त्रैराशिकेशं भौमं शुक्रः पश्यति तदा योगः । त्रैराशिकेशः शुक्रः दशमस्थः भौमदृष्टः तदा योगः ॥ २२ ॥

कुंभे या वृषभेऽलिभे रविगृहे जाताश्च या योषितो ज्ञेयास्ताः परपूरुषेषु निरताः स्वीयः पतिर्मन्मथः ॥ २३ ॥

कुंभे इति । वृषसिंहवृश्चिकघटेषु जाताः योषितोऽपि परपुरुषरता भवंति ॥ २३ ॥

अथान्यवधूपराङ्मुखयोगः ।

गुरोर्गृहे दैत्यगुरावथानयोः खलग्नभाजोरथवे-

१ अनेनार्धश्लोकेनैव वक्तव्यांशपरिपूर्तिरिति नोत्तरार्धं विरचितमिति ज्ञायते ।

त्थशालयोः ॥ विनारदृष्ट्याऽन्यवधूपराङ्-
मुखस्तनौ च जीवे दशमे त्रिगे भृगौ ॥ २४ ॥

अथान्यवधूपराङ्मुखयोगानाह—गुरोरिति । धनुर्मीने शुक्रे भौमदृशा हीने सति परदारपराङ्मुखो भवति। गुरुशुक्रौ लग्ने दशमे च भौमदृष्टिं विना यदा स्थितौ तदा परस्त्रीपराङ्मुखः । गुरुशुक्रौ परस्परेत्थशालितौ तदा योगः । लग्ने गुरुः तृतीये दशमे शुक्रः तदा योगः ॥ २४ ॥

अथ दातृत्वयोगः ।

शुक्रार्कयोर्दशमगेंदुदृशा तदानीं
तुर्येक्षणात्क्षितिसुतस्य वृथा व्ययी स्यात् ॥
लग्नेशभौमसहमेशयुतौ च वित्ते
षष्ठे शनौ तनुपवित्तपपापदृष्ट्या ॥ २५ ॥

अथ दातृत्वयोगानाह । चंद्रः दशमगः सूर्यशुक्राभ्यां दृष्टः तदा अतिदानी भवति । सूर्यशुक्रौ चतुर्थदृष्ट्या भौमेन दृष्टौ तदा योगः । लग्नपभौमधनसहमेशाः यदा द्वितीयस्थाः तदा योगः । षष्ठगते शनौ योगः । लग्नपधनपौ यदा पापदृष्टौ तदा वृथा व्ययी भवति ॥ २५ ॥

अथेर्ष्यालुयोगः ।

सूर्याद्द्वितीयेऽह्नि नक्तमार्कः कृते सराफे

तरणीत्थशाले ॥ बुधेऽथ लग्ने त्रिविनेज्यदृ-
ष्टिमीर्ष्यालुराशन इत्थशाले ॥ २६ ॥

अथ ईर्ष्यालुयोगानाह—सूर्यादिति। बुधेऽर्काद्द्वितीये सति दिवा जन्मनि च सदा ईर्ष्यालुर्भवति । रात्रौ जन्मनि शनितो द्वितीये गृहे बुधस्तदा योगः । रात्रौ शनिना कृते तरफे बुधे दिवार्केणेत्थशाले योगः । लग्ने बुधे भौमशुक्रेत्थशाले गुरुदृष्टिना दृष्टे योगः ॥ २६ ॥

एवं नरप्रकृतिमंबरचारियोगा-
ञ्ज्ञात्वा पुरेवमथ सत्वरजस्तमांसि ॥
पुंसः शुभं तदनुरूपमथाऽशुभं च
निश्चित्य जातकफलं सुमतिर्विदध्यात् ॥ २७ ॥

इति कर्मप्रकाशिकायां मनुष्यजातके प्रकृति-
कथनं नाम त्रयोदशोऽधिकारः ॥ १३ ॥

एवमिति। अमुना प्रकारेण दशमे ये ग्रहाः यस्य द्रेष्काणे यं द्रेष्काणेशं पश्यंति तेषां मध्ये यो बलवांस्तस्य सत्वादिवाच्यम् । एवं पुंसः पुरुषस्य शुभाशुभं निश्चित्य सुमतिः जातकं विदध्यात् ॥ २७ ॥

इति श्रीकर्मप्रकाशिकावृत्तौ मनुष्यजातके
त्रयोदशः प्रकृत्यधिकारः ॥ १३ ॥

## अथोपजीविकाधिकारः ।

अर्थो हि मूलमिह तस्य पुरात्तकर्म-
तद्व्यक्तये मतमभाषत वर्णनास्ति ॥
चंद्रो गतांततिथिहद्भुजादिनेशा-
न्निर्गत्य चेन्मुथशिलः स हि कर्मदर्शी ॥ १ ॥

अथोपजीविकाधिकारः ॥ अर्थ इति । पुरुषमूले द्रव्ये तद्व्यक्तये वर्णनाचार्यमतमभाषत गतपर्वातलग्नादयः सूर्यान्निर्गत्य चंद्रेण चेन्मुथशिलः स्यात्स एव कर्मदर्शी। स चेत्स्वाधिकारेण भवति तदा गतपर्वातलग्नजद्रेष्काणनवांशराशीनां मध्ये योऽधिकारवान्स कर्मदर्शी एषां मध्ये स्वाधिकारे यदा कोऽपि न चंद्रः स्वाधिकारे तदा चंद्र एव अग्रे हद्देशेति वक्ष्यमाणराशयः ॥ १ ॥

हद्देशवत्स निजवर्गगतो दलील-
स्तद्वर्गगोऽथ विधुरात्मबलस्थितो वा ॥
तत्कर्म सौम्यमिति सौम्ययुते ज्ञधातोः
केंद्रस्थितोऽत्र सुतरामिति पुण्ययुक्ते ॥ २ ॥

अत्रैव प्रसंगादुच्यंते । यदा हद्देशः स्वाधिकारे भूत्वा इक्कालगः चंद्रेण सहेत्यशाली तदा स एव कर्मदलीलः । स पापरहितः बलवांस्तदा कर्म शुभं वाच्यम् । अत्रोदाहरणम् । स

बुधेन युक्तस्तदा ज्ञधातोः फलम् । एवं केंद्रगे कर्मदर्शीनिवे-शेन पुण्यसद्मयुक्ते कर्मेशे बुधे केंद्रगतेऽतिबुद्धिमान् तेन कर्मणा पूज्यः ॥ २ ॥

सितदृग्गते सौम्ये कर्मादर्शकसंज्ञिते ॥
नरः स्यात्सूनृताभाषी सुभगः पुण्यलक्षणः ॥ ३ ॥

सितेति । कर्मदलीले बुधे शुक्रदृग्गते सौभाग्ययुक्तः स्यात् ॥ ३ ॥

अन्यमते ।

शुक्रे स्मरे सौरिमहीजवर्गे शन्यारदृष्टेऽन्यकलत्रगामी ॥ तद्वत्सचंद्रो यदि भूमिजश्चेत्तदा नृनार्यौ व्यभिचारिणौ स्तः ॥ ४ ॥

शुक्रे इति । स्पष्टार्थोऽयं श्लोकः ॥ ४ ॥

यदि केंद्रकुजोऽस्य दीपको गुरुदृष्टः प्रभुता ततो दिशेत् ॥ बलवत्पृथुतां प्रचंडतां परदाराभिगमं च मानिताम् ॥ ५ ॥

यदीति । कर्मेनुशी कुजस्तदा स्वधातुफलं कटुफले कटुभाषी स्वल्पबुद्धिः । अयं हि केंद्रगः यदि तदा परदारपरिमर्दं करोति । भौमः बलवान्केंद्रगः गुरुदृष्टस्तदा योगः ॥ ५ ॥

शनाविति ज्ञसंयुतेऽनृतं स्वशास्त्रविप्लवी सुतायशो नृणां कृते परापवादभाग्भवेत् ॥

स्वतुंगगेऽत्र कंटके त्रिराशिपे च तद्गते
मृतस्य सस्वभूग्रही विपर्यये तु नीचता ॥ ६॥

शनाविति । स्पष्टार्थः श्लोकः ॥ ६ ॥

जीवे चैवं गौरवं नायकत्वं सत्सेव्यत्वं धर्म-
शास्त्रज्ञता च॥ केंद्रे तुंगे तात्रिकेशे तथैव
राजा राज्ञा वा समोऽमुक्तबुद्धिः ॥ ७ ॥

जीवेति । स्पष्टार्थोऽयमपि श्लोकः ॥ ७ ॥

हद्देश्वरेण हिमगेऽथ कृतेत्थशाले
हद्देश एव फलदः खलु सौम्यगोऽत्र ॥
पूर्वोदिते दिनपतेः प्रथमं शुभं स्या-
त्पृष्ठोदये तदनु रश्मिगते लघुत्वम् ॥ ८ ॥

हद्देश्वरेणेति । चंद्रे हद्देश्वरेण कृतेत्थशाले सति तदा हद्देश एव कर्मदर्शी स सूर्यात्पूर्वं उदयं गतः तदा प्रथमवयसि । यदा सूर्यात्पश्चादुदेति तदोत्तरवयसि । सूर्यरश्मिगतश्चेन्मातृपितृवर्गगुण्येन लघुत्वम् । यदा कर्मदलीलः येन मिलितः यस्य राशौ वा भवेत्तदा तद्धातुना मिश्रितं तस्य फलं वाच्यम् ॥८॥

यदि शशधरयोगी पूर्णिमाहद्दनाथो-
ऽर्कगुरुशशिभयुक्तस्तद्गुणी स्यात्प्रसिद्धः ॥
रविजशशिजराशौ विप्रपापैर्युक्तो-
ऽखिलगुणनिलयोऽन्यैः स्वाधिकारे ज्ञगुर्वोः॥९॥

यदीति । स्पष्टार्थोऽयं श्लोकः ॥ ९ ॥

ज्ञार्क्योर्युते झकटकृच्च जनोपकारी
शुक्रज्ञयो रवियुतेऽपि च हृद्नाथे ॥
राजाश्रयो लिपिकृदेवमशेषखेटा
युक्ताः स्वरूपसदृशं फलमादिशंति ॥ १० ॥

ज्ञार्क्योर्युते इति । कर्मदलीले बुधशनियुते झकटकृद्भवति । शुक्रबुधयुते राजाश्रयी । एवं सर्वे ग्रहा युत्या दृष्ट्या च स्वकीयं फलं कर्मदलीले प्रयच्छंति ॥ १० ॥

हृद्देशः शुभसंस्थो विक्रूरो दर्शपूर्णिमाकाले ॥
जन्मनि लग्नसहायः शुभमशुभश्चाशुभं
दत्ते ॥ ११ ॥

हृद्देश इति । कर्मदलीलः इक्कालस्थः शुभदृष्ट्या जन्मलग्नं पश्यति तदा शुभफलदः । एतद्विपर्यये सत्यशुभफलदः स्यात् ॥ ११ ॥

अथ कर्मणः प्रकारांतरमाह ।

चंद्रस्यर्क्षे चास्य भागे प्रवेशं
प्राग्यः कुर्यात्सोऽपि कर्मार्थमीक्ष्यः ॥
सौम्यस्थानेऽसौ दलीलः स्वमाना-
त्सौम्योऽथान्योऽन्यानि दत्ते फलानि ॥ १२ ॥

प्रकारांतरमाह—चंद्रस्थर्क्षे इति । यस्मिन् राश्यंशे चंद्रः तिष्ठति तत्रांशे यो ग्रहः प्राक् प्रवेशं कुरुते सोऽपि बलानुमानात्कर्मदलीलो भवति । असौ इक्बालस्थाने स्वमानात्स्वधातुभवानि फलानि दत्ते अन्यानि विपरीते तद्यथा सकर्मदलीलः सूर्यो बलवान् केंद्रगः कंबूली तदा राजा । एवं सर्वेषां फलानि बोद्धव्यानि ॥ १२ ॥

पूर्णिमादर्शयोर्भागे लग्नात्सबलराशिगे ॥
उदये शुभमेतस्य पत्यौ बलिनि सर्वदा ॥ १३॥

पूर्णिमेति । गतपर्वातलग्नं जन्मलग्नाच्छुभस्थानस्थं तस्य स्वामी सबलः उदितः अष्टमगहितः इक्बालगः स्यात्तदा जातकस्य शोभनं वृद्धिश्चेति ज्ञेयम् ॥ १३ ॥

धनग्रहे लग्नगते शुभे पुरा नभोगतेऽस्मिन्धनमस्ति यौवने ॥ रवेः पुरःस्थे च तथा सुतस्थिते दिनेशपष्ठे च नरस्य वार्धके ॥ १४ ॥

धनग्रहे इति । लग्नगः कर्मदलीलः सबलः तदा सः प्राग्वयसि धनं ददाति । दशमस्थे पूर्वोक्तसहिते सति यौवनांते धनं ददाति । पंचमस्थेऽपि यौवने यदा रवेः प्रागुदितः तदा प्राग्वयसि । पश्चादुदिते वार्धके धनं ददाति ॥ १४ ॥

वृद्धिं प्रयात्युडुपतिर्निशि जन्मनोज्ये त्रैराशिके सति निजे त्रिकयुग्मपत्योः ॥

भागे दृशं क्षिपति कांचनरत्नलाभ-
स्तुंगे विधावतिमिथोऽन्यतरोच्चदृष्टे ॥ १५ ॥

वृद्धिं प्रयातीति । अथवा पूर्यमाणे चंद्रे लग्ने सति रात्रौ जन्म तदा बाल्ये धनवृद्धिः । एवं चंद्रे दशमगे यौवने धनवृद्धिः । एवं पंचमेऽपि यौवने । स्वद्रेष्काणगो गुरुः लग्नद्रेष्काणपपुण्यपापाधिष्ठितांशे दृशं क्षिपति पश्यति तदाकांचनरत्नहयादीनां लाभः । उच्चस्थे चंद्रे उच्चस्थेन स्वभेन सप्तमदृशा दृष्टे तदा कांचनादिलाभः ॥ १५ ॥

रात्रौ विधौ सितगृहेऽधिकृते युवत्या-
ज्ज्यक्षे लिपेः कुजगृहस्य बलाद्धनाप्तिः ॥
मंदे कृपिष्वपितृतो गुरुभे कलायाः
सूर्यालये नरपतेः स्वगृहे स्वकीयात् ॥ १६ ॥

रात्राविति । रात्रौ जन्मनि अधिकारवांश्चंद्रः शुक्रगृहे तदा स्त्रीद्वारा धनाप्तिः । एवं चंद्रे बुधगृहे लेखनाद्धनाप्तिः । एवं चंद्रे कुजभे व्यापारतः । एवं चंद्रे शनिभे पितृमातृवचनान्मृतद्रव्यप्राप्तिः । एवं चंद्रे गुरुभे कलातो धनाप्तिः । एवं चंद्रेऽर्कभे नरपतेः सकाशात् । एवं चंद्रे स्वभे स्वकीयाद्धनाप्तिः । बलानुमानादिति सर्वत्र बोध्यम् ॥ १६ ॥

द्युजननेऽधिकृते शशिवद्रवावजगते सविशेषमर्थावरे ॥ नरपतिर्ज्ञगृहे नयशास्त्रविद्वितथवाग्गुरुहद्बुधे भृशम् ॥ १७ ॥

द्युजनने इति । दिवा जन्मन्यधिकृतेऽर्के शशिवत्फलं ज्ञेयम् । अन्यत् स्पष्टम् ॥ १७ ॥

चंद्रे त्रिनेतरि बुधस्य गृहेऽथ हृद्दे
वृद्धिर्लिपेरवनिजस्य च शौर्यवृत्त्या ॥
जीवस्य राजकुलतस्तरणेर्नृपत्वा-
दार्केर्ध्रुवार्थविषयाच्च भृगोर्युवत्याः ॥ १८ ॥

चंद्र इति । रात्रिजन्मनि सति चंद्रो द्रेष्काणेशो बुधगृहे हद्दाया वा स्थितस्तदा लिखनाद्धनप्राप्तिः । एवं भौमगृहे वा हद्दाया वा यदा चंद्रस्तदा शौर्यवृत्त्या । एवं जीवगृहे हद्दाया वा यदा चद्रस्तदा राजकुलात् । एवं सूर्यगृहे हद्दाया वा यदा चंद्रस्तदा नृपात् । एवं शनिभे कृषिविषयात् । एवं शुक्रभे हद्दाया वा चंद्रे स्त्रीप्रसंगात् ॥ १८ ॥

एवं दिवार्कोऽपि गवेषणीयः सूर्येद्रभावादपरे
परीक्ष्याः ॥ द्रव्यत्रिकेशो भवतीति योऽत्र
तस्य प्रमाणेन धनस्य लाभः ॥ १९ ॥

एवमिति । एवं दिवा जनने सूर्यद्रेष्काणेशो विचारणीयः । प्रसंगात्पूर्वोक्तमपि दर्शितं कर्मदलीलविषये कर्मदलीलाधिकारिणा मध्ये कोऽपि हद्देशं विना चंद्रेणेत्थशालवान्पूर्वं यः चंद्रांशं प्रविशति स कर्मदलीलः स चेत्रष्टदग्धः तदा रात्रौ चंद्रः दिवा सूर्यः तौ यदा निर्बलौ तदा वक्ष्यमाणा ज्ञेयाः । पुण्य-

सहमगतपर्वातलग्नेशतृतीयेशनवमेशदशमेशाः एते विचारणीयाः एतेऽपि यदा नष्टदग्धाः तदा जन्मकर्महीनामिति ज्ञेयम् ॥ १९ ॥

शशित्रिकेशेऽभ्युदिते स्वतुंगे चंद्रे च जातः
प्रथितो बृहद्भे ॥ कृतोदयैः कीर्तनकृच्छुभैस्तु
केंद्रे नृपः खेटबलानुसारात् ॥ २० ॥

शशीति । चंद्रद्रेष्काणेश उदितः स्वोच्चस्थः चंद्रे बलिनि बृहद्राशिस्थे सति प्रसिद्धः । अस्मिन् योगे शुभाः । उदितास्तदा कीर्तनकृत् । ते बलिष्ठाः चंद्रं केंद्रस्थं पश्यंति तदा नृपो भवेत् । चंद्रबलानुसारेणेति बोद्धव्यम् ॥ २० ॥

रविशशिसहमेशैर्दशैपूर्णाशकाभ्यां
त्रितयपरिवृढेशैर्धातुभिः सर्वभानाम् ॥
नृपजलपशुभूमीमर्त्यभस्थैर्यथाहों
भवति तदनुरूपो वित्तलाभः क्रमेण ॥ २१ ॥

रवीति । अत्र प्रसंगाद्राशिफलान्याह—नृपेति । नृपराशौ राजकुलाज्जलस्थलाच्चतुष्पत्सु चतुष्पद्भ्यः भूमौ भूम्यां मर्त्योऽजनादिति योगकर्ता ग्रहो यस्मिन् राशौ तदनुमानेन फलम् ॥ २१ ॥

द्रव्यपुण्यसहमे यदि केंद्रे पुण्यभे वपुषि चोपरि सौम्ये ॥ ईश्वरो हि निजहद्दगते वा द्रव्यनेतरि शुभे सविशेषम् ॥ २२ ॥

द्रव्येति। यदा द्रव्यपुण्यसद्मं केंद्रगे नवमगे लग्ने वा तयोर्द्वादशस्थे शुभे राजा स्यात् । अस्मिन्नेव योगे निजहद्दगते धनस्वामिनि शुभग्रहे सति विशेषेण राजा स्यादेव ॥ २२ ॥

दिनेंऽशुमालिनेक्षिते निशींदुना धनेश्वरे ॥
धनाप्तयो विवर्त्स्यता विशेषतः स्युरुत्तमाः॥२३॥

दिनेंशुमालिनेति। दिवा जन्मनि धनेशेऽर्केण दृष्टे रात्रौ चंद्रेण दृष्टे तत्र चंद्रश्चेद्वर्धमानः स्यात्तदा धनाप्तिः ॥ २३ ॥

लग्नाद्यमंशात्तमिहास्ति यत्र द्रव्येश्वरस्तद्गतकार्यपेभ्यः ॥ द्रव्याप्ति ऋक्षग्रहधातुमाना बलेन तुल्या व्ययगेऽर्थनाशः ॥ २४ ॥

लग्नादिति। लग्नाद्दशमपर्यंतं यत्र भावे कर्मद्दलीलः तद्गतधातुभ्यो द्रव्याप्तिः ॥ २४ ॥

उक्तस्थानगते त्र्यंशे स्त्रीपक्षादर्थलब्धयः ॥
पुरुषांशे गताः पुंसां राजराशौ जनेश्वरात्॥२५॥

उक्तस्थान इति। लग्नभोग्यांशाच्चतुर्थभुक्तांशावधि स्त्रीभागः। चतुर्थभोग्यांशात्सप्तमभुक्तांशावधि पुरुषभागः। सप्तमभोग्यांशाद्दशमभुक्तांशावधि स्त्रीभागः। दशमभोग्यांशाल्लग्नभुक्तांशावधि पुरुषभागः। एवं स योगकर्ता स्त्रीराशौ तदा स्त्रीजनद्वारा लाभः। एवमेव पुरुषपक्षतोऽपि ज्ञेयम् ॥ २५ ॥

केंद्रे श्रेष्ठस्तत्समीपे च मध्यस्त्र्यक्षांशोऽब्जे सें-
दुवारे दरिद्रः ॥ षष्ठे चांतेऽतीव दुःस्थोऽति-
धन्यः पुंस्त्रीखेटैरात्मयातैर्नरः स्यात् ॥ २६ ॥

केंद्रेति। चंद्रः केंद्रगः श्रेष्ठः पणफरे मध्यम आपोक्लिमे हीनफलदः। षष्ठांत्यस्थश्चेद्दारिद्र्यम्। इदं तु दैवं रोमकोक्तेराशिकेशे चंद्रे सति पुंग्रहाः पुरुषराशिगताः स्त्रीग्रहाः स्त्रीराशिगतास्तदा धन्याः। तत्रापि स्वपदस्थाश्चेदतीव धन्या ज्ञेयाः ॥ २६ ॥

केंद्रस्थसूर्यशशिनोरपि दक्षिणेन
भौमे दृढो भृगुसुते सुभगोऽतिभोगी ॥
सौम्ये सुबुद्धिरमरेज्यकृतेऽतिदानी
मंदे प्रियः स्थिरधनः पितृमातृतश्च ॥ २७ ॥

केंद्रस्थेति। केंद्रस्थसूर्यशशिनोः सकाशाद्दक्षिणगो भौमः द्रव्यशाली तदा दृढः। एवं शुक्रे भागी एवं। बुधे सुबुद्धिः। एवं गुरौ अतिदानी। एवं मंदे स्थिरधनः ॥ २७ ॥

यत्र दक्षिणहस्तस्था दिशि स्युः पुण्यखेचराः ॥
सौम्याश्चाक्रूरदृग्युक्तास्तद्दिग्भागेऽर्थलब्धयः २८

यत्रेति। शुभकर्मदर्शिलाः स्वपदस्थाः पापदृग्योगवर्जिताः लग्नाद्यत्र दिशि स्थिताः तत्र दिशि लाभः भविष्यतीति ज्ञेयम् ॥ २८ ॥

प्रकारांतरमाह ।

कर्मज्ञानं भूयसां संमतोक्तं यच्चेदानीमुच्यते तच्चतुर्धा ॥ आज्ञा वार्ता सत्कलाः स्युस्त्रयोऽर्हाः कर्मोपाया भैक्ष्यमापच्चतुर्थः ॥ २९ ॥

अथ प्रकारांतरेणाह—कर्मज्ञानमिति । कर्मज्ञानार्थं वृद्धाचार्यैः यदुपदिष्टं तत्कर्मज्ञानं चतुर्धा चतुःप्रकारकम् । आज्ञा १ वाणिज्यं २ हस्तकर्म ३ एते त्रयः कर्मोपायाः श्रेष्ठाः । चतुर्थं भक्ष्यम् । एवं चतुर्धा कर्मोपायः ॥ २९ ॥

तज्ज्ञाने खं खेचरोऽञ्जः कुजो ज्ञः शुक्रो वीक्ष्यश्चाथ चत्वार एते ॥ नान्ये यस्मादीश्वरोऽर्कः सलीलो जीवो धर्मश्चाक्षमः सौरिरज्ञः ॥ ३० ॥

तज्ज्ञान इति । उक्तप्रकारेण दशमस्थानं तस्य स्वामी भौमशुक्रबुधचंद्रा निरीक्ष्याः अन्ये ग्रहा न निरीक्ष्याः ॥ ३० ॥

एते केंद्रे तत्परे वा शुभस्थाः सौम्यैर्दृष्टाः कर्मरम्यं दिशंति ॥ आपद्योगाद्दुष्कृतानां हि पुंसां सौम्यासौम्यात्कर्मयोगो विदध्यात् ॥ ३१ ॥

एत इति । ग्रहो यस्मिन् राशौ इदं पूर्वोक्तं विचार्य केंद्रादीनामन्वेषयेत् १ । ४ । ७ । १० तत्परतः पष्ठे एतेषां

---

१ चित्रवादनादिकम् ।

-स्वामिनो निरीक्ष्याः । पुण्यसद्ममपि गतपर्वातेलग्नं च तस्य स्वामी । एते निरीक्ष्याः । एते सौम्यैर्दृष्टा युक्ताः शुभराशि-स्था युक्ताश्च तदा रम्यं कर्म आपद्योगाद्दुश्चितानां जीवानां कर्मयोगं विदध्यात् ॥ ३१ ॥

कर्मेशे स्वे धाम्नि हद्दे दृकाणे कर्म श्रेष्ठं तुंगगे ख्यातियुक्तम् ॥ वक्रिण्यूनं नष्टदग्धेन किंचित्तस्याभावे राशिधातुः प्रयोज्यः ॥ ३२ ॥

कर्मेश इति । सः कर्मदलीशः स्वगृहस्वहद्दास्वद्रेष्काणस्थः उत्तमं कर्म दिशति । सः उच्चस्थः बली तदा नायकत्वं ददाति चेद्वक्री तदा हीनं कर्म दिशति । नष्टदग्धश्चेद्विशेषेण तस्याभावे राशिधातुः प्रयोज्यः ॥ ३२ ॥

जीवस्यर्क्षे कर्मपे कर्मसौख्यं मंदस्योनं ज्ञस्य बुद्ध्या तु नेंदोः ॥ लोकात्पूर्वं भास्वतः स्वप्र-भुत्वं भौमस्यैताहक्कवेर्भोगयुक्तम् ॥ ३३ ॥

जीवस्येति । गुरुराशौ कर्मदलीशे गौरवं शनिगृहे लघुत्वं सर्वेषां ज्ञेयम् ॥ ३३ ॥

लग्नस्योपरिगे भवे समुदयः कर्मग्रहे कर्मणां चाधःस्थे पतनं प्रधानगणना खेऽन्त्ये च दोषा-गमः ॥ सौम्यस्थे तु शुभं विलोममशुभे

नीचेऽतिकष्टा दशा नीचेऽप्यत्र निजाधिका-
रिणि फलं मध्यं खगास्तेऽधमम् ॥ ३४ ॥

लग्नस्येति । लग्नभुक्तांशे एकादशे कर्मेशे तदोत्तम कर्म । लग्नाद्वितीये तदा पतनम् । दशगे तदा प्रधानः । द्वादशे उत्तमं दोषागमश्च । सौम्यराशिगे शुभम् । पापराशिगेऽशुभम् । नीचस्थे शैथिल्यं अतिकष्टं च । अत्र निजाधिकारिणि तदा मध्यमम् । सूर्येण सहास्तंगते तदाऽधमं फलं ज्ञेयम् ॥ ३४ ॥

कर्मग्रहे शुभदृशा शुभैर्दृष्टेऽस्ति कर्मगे ॥
अशुभैः शीतकः कर्म आरभ्याथ विमुंचति३५॥

कर्मग्रह इति । कर्मदलीले मित्रदृशा शुभेन दृष्टे तदा कर्म अस्ति पापैर्दृष्टे कर्मदलीले तदा शिथिलं कर्म यदारभते मुंचति च ॥ ३५ ॥

कर्माधिकारिणि कुजे खलु लाघवं स्या-
'दग्निविह्निसदृशं धरणौ तदाभम् ॥
नृत्यादिकं मरुति वारिणि मौक्तिकादि-
वृत्तिर्नखिप्रभृतिकर्म ग्रहर्क्षतुल्यम् ॥' ३६ ॥

कर्माधिकारिणीति । कर्मदलीले भौमे सरोषी व्यवसायी । एवमग्निराशिगे भौमे तदाऽग्निकर्म लोहकारसुवर्णकारकुंभकारादि-बलानुमानाज्ज्ञेयम् । एवं कुजे भूमिराशौ तदा गृहकर्माणि गृहवाटिकूपक्षेत्रखनित्रादि । एवं कुजे वायुराशौ नृत्यादि-व्यापारादिकं च करोति । एवं कुजे जलराशौ मौक्तिकादिव्य-

चरारं कुर्यात् । विशेषयोगानाह । कर्मद्रलीलो नरराशौ यदा तदा मानुषविक्रयी । चतुष्पदराशौ अश्वगजादिकर्मप्रदः । यद्राशौ तिष्ठति तत्तुल्यं फलं वाच्यम् ॥ ३६ ॥

शुक्रेऽधिकारवति कर्मणि कर्मखेट-
दृष्टे च गीतविषयं त्वनिले कलाद्यम् ॥
भूमौ मणिप्रभृति वारिणि मौक्तिकाद्यं
वह्नौ सुवर्णरजतादि करोति कर्म ॥ ३७ ॥

शुक्रे इति । अधिकारवति शुक्रे दशमगे कर्मग्रहदृष्टेऽनिलराशिगे तदा नृत्यसुखम् । एवंविधे शुक्रे भूमिराशिगे सुगंधादिवस्तुसुखम् । एवं शुक्रे जलराशिगे मौक्तिकादि । एवमग्निराशौ शुक्रे सुवर्णरजताना कर्मकरः ॥ ३७ ॥

बुधे कर्मप्राप्ते द्विपदयुजि कर्मग्रहदृशि
प्रबोद्धा शास्त्राणामिति दहनभे नाणककरः ॥
क्षितौ कृष्योर्वीकृन्मरुति विहगा खेटकुशलो
जले नौकूपाद्यं रचयति कृती सूक्ष्मगणने ॥३८॥

इति श्रीकर्मप्रकाशिकायां मनुष्यजातके चतुर्दशः
कर्मप्रत्ययाधिकारः ॥ १४ ॥

बुधे कर्मप्राप्त इति । बुधे दशमगे द्विपदराशौ कर्मगृहं निरीक्षयंति तदा शास्त्राणां प्रबोद्धा । अग्निराशौ चेन्नाणक-

१ नाणकं नाम द्रव्यव्यवहारार्थं रूप्यकांतर्गतो भागः ।

करः । स च भूमिराशौ तदा कृष्यादिकर्मकर्ता । स च वायुराशौ तदा खेटकर्मणि पक्षिज्ञाने च कुशलः । स च जलराशौ तदा सायात्रिकः कूपाद्यकर्मकर्ता लेखने गणिते च कुशलः ॥३८॥

इति कर्मप्रकाशिकावृत्तौ चतुर्दशः प्रत्ययाधिकारः ॥ १४ ॥

## अथाजीविकाधिकारः ।

आजीविका या न भवेन्नराणामुपाधिभूतेन वपुःकृतेन ॥ तद्धस्तकर्मेह मतं हि तज्ज्ञैस्त-दुच्यते वर्त्म धनागमस्य ॥ १ ॥

अथाजीविकाधिकारः । आजीविकेति । येन कर्मणा नराणामाजीविका भवेत्तद्धस्तु कर्म इति तच्छास्त्रज्ञैः कथितं तदुच्यते ॥ १ ॥

सूर्येन्द्वीश्वरहस्तकर्मसदमाधीशो ग्रहो हृद्पै-स्तद्द्रष्टृनथ लक्षयेच्च सदसद्व्यापारसंचितये ॥ एषां स्नेहदृगीक्षणेन हि शुभव्यापारकृत्वा-न्यथा दृष्ट्यानिष्टविचेष्टकः खलु भवेन्नष्टा-धिकारास्पदः ॥ २ ॥

सूर्येन्द्वीश्वेति । सूर्यचंद्रेश्वराः कर्माधिपा एषा हृद्पाः द्रष्टारः सदसद्व्यापारसंचितये लक्षयेत । एषा स्नेहदृष्ट्या शुभं अशुभदृष्ट्याऽशुभं एते नष्टाधिकाराः असद्ग्रहगास्तदाऽसद्व्यापारकृत्पुरुषो भवति ॥ २ ॥

चंद्रेत्थशालिनि रवौ स्वगृहोच्चहद्दे
व्योमस्थकर्मपदृशा नृपतेरमात्यः ॥
भौमेक्षिते सबलकर्मकरो ज्ञगुर्वो-
र्दृष्ट्या नृपस्य लिपिकृत्सुकृतप्रधानम् ॥ ३ ॥

चंद्रेत्थशालिनीति । स्वगृहोच्चहद्दगे रवौ चंद्रेत्थशालिनि दशमस्थः कर्मपः पश्यति तदा नृपतेरमात्यः स्यात् । एवं भौमेन दृष्टस्तदा सबलकर्मकरः एवं बुधेन दृष्टस्तदा नृपस्य लेखकः । एवं गुरुणा दृष्टस्तदा सुकृतकर्मकृत् ॥ ३ ॥

एवं शनौ गुरुदृशि क्षितिकर्मकारी
शुक्रेक्षिते गगनलग्नगते नरर्क्षे ॥
संगीतविद्बुधनिरीक्षणतो द्वयस्य
वीणादि वादयति भौमदृशा कुनृत्यः ॥ ४ ॥

एवमिति । एवं शनौ गुरुदृष्टे भूमिक्षेत्रगृहकर्म जानाति । शनिः सशुक्रः लग्ने दशमे नृराशौ वा शुक्रदृष्टः तदा संगीतवित् । एवं शनिशुक्रौ बुधदृष्टौ तदा वीणामृदंगादि वादयति । एवं भौमदृष्टस्तदा लघुत्वम् ॥ ४ ॥

एवं गुरौ खलु घृणीच्छति धर्मशास्त्रं
सार्की कुतर्कक्रूदसौख्यविपादवांश्च ॥
एवं बुधे लिपिकरो गुरुभेऽब्जयोगा-
दध्यापको रविदृशा लिपिकृत्प्रधानम् ॥ ५ ॥

एवमिति । एवं गुरौ कर्माधिकारिणि तदा घृणी दयावान् । एवं शनिसहिते गुरौ कुतर्ककृत् । एवं चंद्रेत्थशालिते बुधे लिखनपठनकृत् । गुरुभे ज्ञयोगाद्वर्वाधिष्ठितराशौ बुधचंद्रेण सह मिलति तदाऽध्यापकः । एवं रविदृष्टस्तदा लेखकमुख्यः ॥५॥

**कर्मदर्शी बुधो जीवशुक्रभास्करवीक्षितः ॥**
**एतद्धातुसमानं हि लिपिं लेखयते नरम् ॥ ६ ॥**

कर्मदर्शीति । कर्मदलीलं बुधं गुरुः पश्यति तदा धर्मशास्त्रस्य प्रवोढा । एवं शुक्रः पश्यति तदा कुमारीं महिषीं प्राप्नोति । एवं कर्मदृष्टस्तदा नृपतेर्लेखकः । एवं चंद्रः पश्यति तदा कुकूटकपटेषु प्रवीणः । अथ भौमः पश्यति तदा चित्राणि करोति । एवं शनिः पश्यति तदा सच्छिद्रवचनानि लिखति । एतेऽत्र योगविशेषयोगाः ॥ ६ ॥

**कर्माधिकारिणि विधौ शनिनेत्थशाले**
**भूमौ करोत्युपलकर्म निरीक्षिताभम् ॥**
**भौमेन चाग्निभवनेऽग्निविधिं तदा भं**
**जीवेन/जीवभवनेऽर्हति धर्मशास्त्रम् ॥ ७ ॥**

कर्माधिकारिणीति । कर्मपश्चंद्रो भूमिराशौ स्थित्वा शनिना सहेत्थशाली तदा उपलकर्म करोति । दृष्टिवलेन फलं सर्वत्र । यद्यार्कः पश्यति तदा बृहत्पाषाणनिर्मितानि गृहाणि करोति । शुक्रयुतोऽर्कः कर्मेशं चंद्रं पश्यति तदा तृणकाष्ठादीना कर्मकरः । स कर्मपश्चंद्रोऽग्निराशौ भौमेत्थशाली तदाग्निविधं कर्म ।

मिमितिमाह । कर्मपोऽर्केण दृष्टस्तदा प्रवराणि शास्त्राणि करोति । कर्मपश्चंद्रो गुरुदृष्टस्तदा कांस्यादिकर्मेशश्शनिना दृष्टस्तदा लोह-कारः । स शुक्रदृष्टः स्वर्णकारः । स बुधदृष्टस्तदा रसायन-क्रियाकरः । चंद्रो धनुर्मीने स्थित्वा जीवेत्यशाली तदा धर्म-शास्त्रज्ञः । सूर्येण दृष्टस्तदा तर्कज्ञो वादी च । एवं बुधदृष्टे आचार्यः । एवं भौमदृष्टे वैद्यः । मृगराशिस्थे कर्मपे कामारी । शनिना दृष्टे नापितः । एवं भूमिराशिस्थः शनिः पश्यति तदा खननकर्म करोति ॥ ७ ॥

बह्वीक्षिते कर्मदलीलखेटे ध्रुवं नरः स्याद्बहु-
कर्मकारी ॥ तेषां त्वमुं पीडयते भृशं यस्त-
द्धातुकर्मप्रवणो विशेषात् ॥ ८ ॥

बह्वीक्षिते इति । कर्मगृहे बहुभिर्ग्रहैर्वीक्षिते तदा बहुकर्मकारी तथैरदृष्टानां मध्ये यस्य तेजः गृह्णाति तद्धातुकर्मणि प्रवीणः स्यात् ॥ ८ ॥

सूर्यरश्मिगताः सर्वे पश्यंतः कर्मनाशकाः ॥
बुधवर्जमसौ रश्मिस्थोऽलंकर्म समादिशेत् ॥ ९ ॥

सूर्यरश्मिगता इति । सखर्यरश्मिगतस्तदा कर्म नाशयति । बुधकर्मेशो रश्मिगः तदा लिखनपठनादिवृद्धिं करोति । बुधं विना सर्वे ग्रहाः सूर्यरश्मिगताः कर्मपं पश्यन्ति तदा कर्म-नाशः । बुधः रश्मिस्थश्चेदलंकर्मीणतां करोति ॥ ९ ॥

अथ वाणिज्यव्यवसाययोगः ।

लग्ने सिते रूक्षगते स्वहर्षे सौगंधिकः कर्म-
धटेऽत्र सौरिः ॥ मृगस्थमंदस्य दृशा स्वयं
वा मृगस्थितेऽस्मिन्मृगनाभिकारः ॥ १० ॥

लग्ने सित इति । कर्मपः शुक्रो लग्नस्थः शत्रुराशिगतो हर्षितः तदा सौगंधिकः । तुलास्थः शनिः कर्मपं शुक्रं पश्यति वा मृगस्थं कर्म शुक्रं तुलास्थो मंदः पश्यति तदा कस्तूरिकाकारः स्यात् ॥ १० ॥

शुक्रे वृषस्थे शनिनेक्ष्यमाणे सौगंधितैलादि-
वणिग्दलीले ॥ मनुष्यभेऽस्मिंश्च मृगेशपंगौ
सौगंधिको मुल्तकवस्तुनः स्यात् ॥ ११ ॥

शुक्र इति । कर्मेशे शुक्रे वृषे शनिना दृष्टे तदा सौगंधिकतैलव्यापारकृद्वणिक्स्यात् । शनियुतः कर्मपो मनुष्यराशौ यदा तदा सुगंधवस्तुवणिक्स्यात् ॥ ११ ॥

लग्ने कुजर्क्षभुजि भुव्यसुरेज्यपंगवोः
स्याद्गांधिको व्यवहरत्यगदानि लोके ॥
सद्गंधवस्तुबलदे भृगुजेऽर्कमंदे
भौमे तु गोयुवतिभार्किदृशा च रक्तम् ॥ १२ ॥

लग्न इति । कर्मेशः शुक्रो मेषवृषस्थो लग्ने गुरुशनिदृष्टस्तदा सौगंधिकः सबले [illegible]के मंददृष्टे सौगंधिकः । कर्मेशं भौमं कन्यास्थः शनिः पश्यति तदा सौगंध्यकृत् ॥ १२ ॥

अथ फलविक्रययोगः ।

मकरयुजि शनैश्वरे कुलीरे निमिषगतेज्यदृशा हि दाडिमाद्यम् ॥ व्यवहरति फलोत्करं किलैवं वृषगगुरौ लघुकर्कगारदृष्ट्या ॥ १३ ॥

अथ फलविक्रययोगानाह–मकरयुजीति । शनिर्मकरस्थः गुरुदृष्टो वा कर्कगः शनिर्मकरस्थेन गुरुणा दृष्टस्तदा दाडिमानि विक्रीणाति एवं मकरगः शनिर्मीनगेन गुरुणा दृष्टस्तदा बृहत्फलानि विक्रीणाति । वृषगो गुरुर्लघुराशिगेन कर्कराशिगेन भौमेन दृष्टस्तदा लघुफलानि विक्रीणाति ॥ १३ ॥

मृगे शनौ कुलीराब्जदृष्टे वल्कमर्थयेत् ॥
ज्ञे जलर्क्षे च तद्दृष्टे कर्कटीचारुवल्कलम् ॥१४॥

मृगेशनाविति । मृगस्थः शनिः कर्कस्थेन चंद्रेण दृष्टस्तदा वल्कलानि विक्रीणाति । बुधः कर्मपे जलराशौ चाब्जेन दृष्टस्तदा कर्कटचादीनि चारुवल्कलानि विक्रीणाति गर्जराणि च ॥१४॥

गगनगबुधशुक्रयोर्जलौर्वीगतशनिवीक्षितयोर्हली कुटुंबी ॥ बलदबुधशिले यमेऽनृजुस्थे रविगसितेंदुजयोर्बले तु नीचः ॥ १५ ॥

अथ कौटुंविकयोगमाह–गगनेति । कर्मपः शुक्रः अनूजुजलराशिगेन शनिना दृष्टः तदा हली कृषिकरः । एवं शुक्रे भूमिराशिगेन शनिना दृष्टे तदा गेहं उत्करमृदं विक्रीणाति । एवं कन्यास्थे शुक्रे मीनस्थेन शनिना दृष्टे तदा तीक्ष्ण उत्करमृदं विक्रीणाति । बुधयुक्ते शुक्रे कर्मपे जलराशिगतभूमिराशिगतशनिना दृष्टे तदा कुटुंबी । कर्मपः शुक्रः अनूजुविषमोदयराशिस्थेन शनिना मुत्थाशिली तदा कुटुंबी । सितबुधौ रविगतौ वलयुतौ तदा कुटुंबी ॥ १५ ॥

लग्ने खेऽथ सिते स्थिरर्क्षयुजि भूराशिस्थसौम्येक्षिते विक्रीणाति पटं पटार्धमनिलस्थे वा तथैकत्र च ॥ मंदे कुंभमृगास्थिते धटयुवत्र्यूक्षस्थिते ज्ञेक्षिते श्रेष्ठं कोमलमृक्षगेऽत्र युवतेर्ज्ञप्रेक्षिते स्थूलकम् ॥ १६ ॥

लग्ने खे इति । स्थिरराशिगे शुक्रे लग्ने दशमे वा भूमिराशिगेन बुधेन दृष्टे तदा पटं पटार्धं विक्रीणाति । एवं स्थिरराशिगे लग्ने दशमे वा शुक्रः अनिलराशिगतेन बुधेन दृष्टः तदा पटार्धानि क्रीणाति । एवं स्थिरराशिगे लग्ने दशमे वा शुक्रः अनिलराशिगेन बुधेन दृष्टस्तदा पटार्धं विक्रीणाति एवमनिलस्थे शुक्रे दशमे लग्ने वा स्थिरराशिगतेन बुधेन दृष्टे तदा पटार्धानि ।

१ रंगाजीवकर्मकारीत्यर्थः ।

बुधशुक्रानिलराशिगौ लग्ने दशमे वा तदा पटार्थानि । कुंभमकरराशिगे शनौ कन्यास्थगतेन बुधेनेक्षिते तदा श्रेष्ठानि कोमलानि विक्रीणाति स्त्रीराशिस्थः शुक्रः बुधेन दृष्टस्तदा स्थूलपटानि विक्रीणाति ॥ १६ ॥

> ज्ञेज्यान्विते मृगगतेऽप्यणुजीर्णमार्को
> गोस्थे स्त्रियां गुरुदृशातिपटं जरं च ॥
> पट्टांशुकं घटगतेज्यदृशि ज्ञभस्थे
> भौमेक्षिते व्यवहरत्यरुणं च वासः ॥ १७ ॥

ज्ञेज्यान्विते इति । ज्ञेज्यान्विते शनौ मकरगे लघुजीर्णानि पटानि विक्रीणाति । वृषस्थेन गुरुणा दृष्टो मकरगः शनिः कन्यास्थेनेज्येन वा दृष्टस्तदातिजीर्णानि पटानि विक्रीणाति । एवं तुलास्थो गुरुः शनिं पश्यति तदा पट्टांशुकं[१] विक्रीणाति । बुधराशिस्थः कर्मपः शनिः भौमेन दृष्टस्तदा रक्तवस्त्राणि विक्रीणाति ॥ १७ ॥

> जीवे चतुष्पदगते च चतुष्पदस्थ-
> रंध्रेशदर्शिनि नरोऽर्थककंबलानि ॥
> दृष्टः स्वरूपसदृशानि गुरूण्यणूनि .
> वर्णात्मकानि पशुजाविभवोष्ट्रकाणि ॥ १८ ॥

---

१ कौशेयवासांसीत्यर्थः ।

जीवेति । चतुष्पदराशिगो गुरुः चतुष्पदराशिगेनाष्टमेशेन दृष्टस्तदा कवलानि विक्रीणाति । द्रष्टुः स्वरूप सदृशानि उत्तम-मध्यमा धमान्यूर्णावस्त्राणि तत्तद्वर्णसदृशानि विक्रीणाति ॥१८॥

युग्मम् ।

बुधे कर्मस्वामिन्यनिलयुजि तत्स्थार्कजदृशा
मृगे चैवं मंदे वृषगशशिदृश्यर्थति यवान् ॥
सगोधूमान्स्त्रीस्थे शशिनि तु मसूरादिवृषगे
शनौ खेटादृष्टे धिपणसहिते मिश्रितकणान् १९॥

बुध इति । बुधे कर्मपेऽनिलराशिगे अग्निराशिस्थशनिना दृष्टे गोधूमान् । एवं शनौ मकरगे कन्यास्थचद्रेण दृष्टे मसूरान् । एव शनौ वृषगे गुरुसहिते ग्रहदृष्टिरहितेऽपि धान्यानि विक्रीणाति ॥ १९ ॥

तिलान्कन्यायुक्तामरगुरुदृशाराकंसहिते
कनिष्ठान्नं तिक्तं शशियुजि रसस्निग्धविपयम् ॥
विधौ चैवं कन्यायुजि शनिदृशा तंदुलतिला-
न्मृगस्थार्कार्किभ्यां यवयवजधान्येऽर्थति नरः२०

तिलानिति । एवं कन्यायुतग्रहदृशा तिलान्न विक्रीणाति । एवं सभौमे शनौ वृषगे कनिष्ठतिक्तधान्य विक्रीणाति । एवं सार्क शनौ वृषभगे गोधूमान्नम् । एवं वृषगं शनिं कन्यास्थोऽर्कः पश्यति तदा गोधूमान्नम् । एव सेंदौ शनौ वृषभे स्निग्धवस्तूनि विक्रीणाति । एवमिंदौ कन्यास्थे शनिदृष्टे

एवमर्कार्कौ मकरगौ चंद्रदृष्टौ तदा यशान्याव-
ककर्लवादीनि च विक्रीणाति ॥ २० ॥

कुंभे मंदे कर्मदेऽब्जालिगेऽब्जे मंदालोके
चर्मभांडं करोति ॥ वायौ वक्रारस्य दृष्ट्या
पुराणां चातुष्पाद्ये चात्र मंदेन दृष्टे ॥ २१ ॥

कुंभेति । एवं मंदे कुंभगते तदा गोचर्माणि विक्रीणाति ।
एवं चंद्रे वृश्चिके मंदालोके सति चर्मभांडानि चित्रकर्माणि
च । एवं वृश्चिकगे चंद्रे वक्रिलेन वायुराशिगतेन भौमेन दृष्टे
तदा जीर्णचर्माण्युपानहौ च । एवं चतुष्पदगे चंद्रे शनिदृष्टे
तदा जीर्णपादत्राणादि । एवं शनिः मिथुनगेन गुरुणा दृष्टस्त-
दा जीर्णचर्माण्युपानहौ च । एवं मिथुनगः शनिः बुधेन दृष्ट-
स्तदाऽश्वप्रावरणान् । कर्मपं गुरुं च चतुष्पदराशिगश्चंद्रः
पश्यति तदा आविकचर्माणि विक्रीणाति ॥ २१ ॥

जीवे कर्मबले चतुष्पदगतेऽरीशेक्षिते तत्पदा-
न्युष्ट्रान्यात्यरिपे सितेक्षितपदे ज्ञे गर्दभान्
शीतगौ ॥ ज्ञस्थाने सुरभी रवौ शशिपदे
चाश्वान् शनौ तत्पदे छागान्षष्ठगतेऽस्तपे
च नवमस्त्रीशे स्ववित्ते च गाः ॥ २२ ॥

जीवेति । कर्मपे जीवे चतुष्पदगे, षष्ठाधिपेन चतुष्पदगेन
दृष्टे राशियोग्यचतुष्पदानि विक्रीणाति । कर्मपो गुरुः षष्ठपः

शुक्रश्चतुष्पदगस्तं पश्यति तदा करभान् । एवं गुरावरिपेण सिताधिकारवर्ति चतुष्पदगेन बुधेन दृष्टे स गर्दभान्विक्रीणाति । एवं गुरौ बुधवर्गगतेन चतुष्पदगेन चंद्रेण दृष्टे सति गां विक्रीणाति । एवं गुरौ राशिपदगेन चतुष्पदगेऽर्कणारिदृशा दृष्टेऽश्वान् । एवं गुरौ सूर्यपदगे चतुष्पदगेन शनिनारिदृशा दृष्टेऽजान् । पत्रगतेन सप्तमपेन चतुष्पदराशिगेन कर्मपो गुरुर्दृष्टश्चेच्छागान् । एवं गुरौ नवमपतृतीयेन धनभावगतेन चतुष्पदगेन दृष्टे सति गां क्षीरं च विक्रीणाति । नवमपेन क्षीरं तृतीयपेन गाम् एवं गुरुश्चतुर्थेशेन चतुष्पदगेन समं युथशिली तदा विडालान् एवं गुरौ चतुष्पदगेन दशमस्थेन बुधेन दृष्टे तदा पतत्रिणं विक्रीणाति । एवं गुरौ भौमदृष्टे सति पतत्रिणः श्येनादीन् एवं गुरौ मंदृदृष्टे पारावततित्तिरिमयूरादीन्विक्रीणाति । एवं गुरौ चंद्रदृष्टे तदा कुक्कुटान् । एवं गुरौ जलराशिगे चंद्रेण दृष्टे तदा पानीयकुक्कुटान् । एवं गुरौ सूर्येण दृष्टे तदा योग्यपतत्रिणो विक्रीणाति । एवं गुरौ बुधयुक्ते जलगेन चंद्रेण दृष्टे लघुमत्स्यान् । एवं कर्मपं चंद्रं गुरुः पश्यति तदा बृहन्मत्स्यान्विक्रीणाति ॥ २२ ॥

शुक्रे कर्मदलीलदे सतरणौ क्रीणाति जात्यान्मणीनारस्थेऽनलसंस्थभूसुतदृशा मुक्ताः सयुग्मेऽत्र च ॥ सार्कौ मध्यमिका शनाविति जले शुक्रेक्षिते चाधमा शिप्राश्चंद्रदृशा विना परदृशं चाम्बुः कपर्दानि च ॥ २३ ॥

शुक्रेति । कर्मपः शुक्रोऽर्कयुतस्तदोत्तममणीन् विक्रीणाति परीक्षयति च । एवं शुक्रं जलराशौ स्थितं धर्मस्थो भौमः पश्यति तदा मुक्ताः । एवं शुक्रे मिथुनगे शनियुते तदा मध्यविधाः । एवं शनिजलगे शुक्रेक्षिते तदाऽधमाः । एवं शनौ चंद्रदृष्टे शिप्राः । एवं शनिं जलराशिगं नान्यः पश्यति तदा कपर्दिकानि विक्रीणाति ॥ २३ ॥

सूर्येऽधिकारिणि शिखिस्थधनेशदृष्टे
सौवर्णिकोऽर्कतनये च शशांकदृष्टे ॥
चापस्थभास्करदृशाजगवित्तपाक्यो-
स्तारक्रयी हरिधनुःस्थदृशास्य शोद्धा ॥ २४ ॥

सूर्येति । एवं सूर्येऽधिकारिणि वह्निराशिस्थेन धनेशेन दृष्टे तदा सौवर्णिकः । एवं शनौ चंद्रदृष्टे तदा स्वर्णरजतादिव्यापारं करोति । एवं मेषस्थः शनिर्धनेशेन युतः चापस्थेनार्केण दृष्टस्तदा तारविक्रयी । धनुःस्थः शनिः सिंहगेनार्केण दृष्टः तदा अस्य धातुसमूहस्य शोद्धा भवेत् ॥ २४ ॥

अथ कारुकयोगः ।

नीचे वक्रे बुधे कर्मदलीले दृष्टिमानतः ॥
कुविंदस्येश्वरो मंदे मिथुनस्थेऽप्यहर्निशम् २५॥

१ शिप्रा नाम शुक्तिका ।

अथ कारुकनृयोगानाह—नीचेति । बुधे कर्मदलीले नीचे वक्रे, तदा दृष्टिमानतः कुविंदस्येश्वरः । एवं मंदे मिथुनस्थे तदाऽहोरात्रं कुविंदेश्वरः ॥ २५ ॥

ज्ञे चतुर्थे च पूर्वोक्ते सूचिको दृष्टिमानतः ॥
अन्यैरदृष्टे चोर्णाकृद्बहुदृष्टे विचित्रकृत् ॥ २६ ॥

ज्ञे चतुर्थ इति । बुधे चतुर्थे नीचे वक्रगे तदा दृष्टिमानतः सूचिकः । अन्येन दृष्टे तदोर्णाकृत् । बहुदृष्टे विचित्रकर्मकृत् ॥ २६ ॥

कर्मस्थाने कुजदृशि बुधे स्यान्नृराशावयस्कृ-
त्पूष्णा दृष्टे नृपसमुचितास्त्रादिकृद्भार्गवेण ॥
वीणादिज्ञो भवति निपुणः सौरिणेज्येन देव-
स्थानाभिज्ञो हरिधनुरजेष्वेककः काष्ठकर्मा २७॥

कर्मस्थान इति । एवं बुधे कर्मेशे मकरगे कुजदृशि नृराशौ तदा अयस्कृत्स्यात् । एवं च बुधे सूर्यदृष्टे नृपयोग्यास्त्रादिकृत् । एवं बुधे शुक्रदृष्टे तदा वीणादिज्ञः । एवं बुधे शनिदृष्टे तदा भवननिपुणः । एवं बुधे गुरुदृष्टे तदा देवस्थानानि करोति । एवं हरिधनुरजगेन स एककः काष्ठकर्मा स्यात् ॥ २७ ॥

केंद्रे कुजे गुरुदृशीज्यमहीजयोर्वा
मेषे हरावथ नरः खलु चर्मकारः ॥

इंदौ ज्ञहृद्युजि तद्दशि चाग्निराशा-
वालस्थकृद्भवति वीक्षकखेटमानात् ॥ २८ ॥

केंद्रे कुज इति । कर्मदलीले भौमः नीचगः वक्रे भूमिराशि-स्थेनेज्येन दृष्टस्तदा चर्मकारः स्यात् । एवं भौमे गुरुर्मपे सिंहे वा तदा चर्मकारः । एवं नीचगे चंद्रे बुधदृष्टायां बुधदृष्टे वह्नि-राशौ तदा ईक्षकखेटमानादाल्वालस्थकृत् ॥ २८ ॥

शुक्रारयोः कर्मकृतोरथैतत्संपश्यतो वैरिदृशो-
त्थशालात् ॥ वस्त्रस्य वर्णोऽमरदेवसंस्थ-
दृष्ट्या च तद्वर्णसवर्णकाभः ॥ २९ ॥

शुक्रारयोरिति । शुक्रे कर्मपे नीचवक्रगते बुधदृष्टे शुकपिच्छ-निभानि वस्त्राणि मेघश्यामानि करोति । भौमे गुरुणा दृष्टे तत्पदराशिस्थेन दृष्टे पीतवर्णानि वस्त्राणि करोति ॥ २९ ॥

भौमे कर्मदलीलदेऽस्थिखनको भूस्थेऽर्कदृष्टे
मणिस्वर्णादेः परिखाकरो गुरुदृशा चार्कैः
सुरंगाधिकृत् ॥ नौकर्मप्रवणश्च खे ज्ञयमयो-
स्तत्स्वामिदृग्युक्तयोः सूर्यादीक्षकधातुसन्नि-
भवलाच्छ्रेष्ठोऽथ मध्योऽधमः ॥ ३० ॥

भौमेति । कर्मपे भौमे नीचगे भूस्थे भूमिराशिगते लोहखनि खनयति । सूर्यः कर्मपं भौमं यदि पश्यति तदा स्वर्णरौप्या-

करं खनयाति । गुरुः पश्यति तदा परिखाकृत् । शनिः पश्यति तदा सुरंगकृत् । कर्मपो बुधः शनियुतः नीचवक्रस्थः दशमगेन दशमपेन दृष्टो युक्तो वा तदा नौकाकर्मप्रवीणः । यदा शनिरहितस्तदा लघूडुपं च । एतादृशं बुधं रविः पश्यति तदा राजयोग्यां नौकां रचयति । एवं गुरुः पश्यति तदा समुद्रवोहनशीलं सांयात्रिकपात्रं करोति । एवं शनिदृष्टे चारनौकां करोति । एवं भौमदृष्टस्तदा आश्चर्यनौकां नवीननौकां करोति । एवं सौम्ये भौमराशिगेन शुक्रेण दृष्टे उद्यानक्रीडायोग्यां नौकां करोति । शुक्रस्थानगेन चंद्रेण दृष्टे तदा पूर्णनौकां विक्रीणाति । वीक्षकबलानुमानाद्दशमेशेनान्वयः ॥३०॥

खेऽग्नावथार्किकुजयोर्घटयत्ययो हि
दृष्ट्या रवेः प्रहरणं धिपणस्य चित्रम् ॥
इंदौ जले किल खनित्रिकमिंदुराशौ
पेटीं सितेक्षुसितभे ज्ञदृशा कुवस्तु ॥ ३१ ॥

खेऽग्नाविति । मषे शनिः कर्मदलीलः नीचगः अग्निराशिमाश्रित्य कर्मगेन भौमेन दृष्टस्तदा लोहकारः । एवं भौमे वह्निराशिमाश्रित्य कर्मगेन शनिना दृष्टे तदा लोहकारः । एवं शनिभौमौ वह्निस्थेनार्केण दृष्टौ तदा शस्त्राणि घटयति । एवं शनिभौमौ खस्थेन वह्निस्थेनेज्येन दृष्टौ तदा विचित्राणि घटयति । एवं शनिभौमौ जलराशिगेन चंद्रेण दृष्टौ तदा विचित्राणि करोति । एवं शनिभौमौ शुक्रराशिगेन चंद्रेण दृष्टौ तदा

पेटीं घटयाति । एवं शन्यारौ चंद्रराशिगेन शुक्रेण दृष्टौ तदापि पेटीं घटयति । एवं शन्यारौ बुधराशिगेन शुक्रेण दृष्टौ तदापि पेटीं घटयति । एवं शन्यारौ शुक्रराशिगेन बुधेन दृष्टौ तदा विचित्रलोहवस्तूनि घटयति ॥ ३१ ॥

केंद्रे ज्ञेंदुकुजेषु भार्गवदृशा वीणादि केंद्रं विना जानीते पणवादि सौम्यसितयोर्हद्दे स्वके वा मिथः ॥ नृत्यज्ञोऽस्ति मृगस्थभौमधरणीसंस्थज्ञयोश्च स्वभे शुक्रे ज्ञारयुगीक्षिते न मधुरो वर्गस्थितौ वा मिथः ॥ ३२ ॥

केंद्रेति । चंद्रभौमबुधाः केंद्रगाः शुक्रदृष्टास्तदा वीणादिज्ञः । एवं बुधचंद्रभौमाः केंद्रहीनाः शुक्रदृष्टास्तदा पणवादि जानाति । एवं बुधशुक्रौ परस्परं हद्दगतौ स्वहद्दा तदा नृत्यज्ञः । बुधारौ मृगराशिमाश्रित्य भूमिकेंद्रगौ तदा नृत्यं करोति । बुधभौमाभ्यां स्वभस्थे शुक्रे दृष्टे तदा मधुरस्वरेण गानं करोति । बुधारौ परस्परं वर्गस्थितौ तदा नृत्यज्ञः स्यात् ॥ ३२ ॥

केंद्रच्युतारसितयोर्भियगेंदुदृष्ट्या
जीवार्कभेऽवनिसुते च शशीत्थशाले ॥
भौमज्ञयोस्तु सितभे किल सूतिकाज्ञो
दृष्ट्यंतरेण कुरुते शिखिशास्त्रकर्म ॥ ३३ ॥

केंद्रच्युतारसितयोरिति । भौमशुक्रौ केंद्रयुतौ चंद्रदृष्टौ तदा वैद्यो भूत्वा धातुमारणं करोति । एवं कर्मपे भौमे जीवार्कभे शशीत्यशाले तदा भिषक् । एवं भौमज्ञयोः सितभे कर्मपे तद्वान्सूतिकाज्ञः । यदा भौमसौम्यौ सितभे कर्मपौ अन्यदृष्ट्या दृष्टौ तदा इंद्रजालकर्म करोति । भौमः कर्मगः शशिनीत्यशाले तदापि पूर्वोक्तफलं द्रष्टव्यम् ॥ ३३ ॥

दृष्ट्या सितार्कसुतयोर्वृषणार्शजार्ति-
हर्ता रवेर्नयनरोगहरो विधुश्च ॥
तद्धातुरोगहरणो गगनस्थकर्म-
खेटैः परस्परदृशा मृदितास्थिसंधिः ॥ ३४ ॥

दृष्ट्येति । एवं शनिः शुक्रेण सप्तमदृष्ट्या दृष्टः । एवं शुक्रो वा शनिना दृष्टस्तदा वृषणार्शसंबंधिभूयमानपीडानिवारणसमर्थः स्यात् । एवं शुक्रे रविदृष्टे नयनयोरंजनकृत् । एवं शुक्रे चंद्रदृष्टे तदा रोहकं[1] दूरीकरोति । गगनस्थकर्मखेटैः परस्परदृशा मृदितास्थिसंधिः स्यात् ॥ ३४ ॥

तनौ खगे गगनगतेऽर्कनंदने रवौ गुरौ मृगयु-
रथ त्रिगे बुधे ॥ कुजेऽध्वगे मूपकारिधीवरो
बुधाब्जयोर्युवतिचापझपे च पंजरी ॥ ३५ ॥

---

१ रोहकं नाम नेत्रमध्ये आलोकप्रतिबंधकं पुष्पम् ।

तनावेति । लग्ने कर्मपेऽर्के गगनगतशनिना दृष्टे तदा मृगयुः । एवमर्के लग्ने गुरौ दशमगे तदा मृगयुः । एवं बुधे तृतीयगे नवमगतभौमदृष्टे तदा शुनो गृहीत्वा ओखेटकं करोति । एवं बुधे जलराशिगे तृतीयगे नवमगतभौमदृष्टे तदा धीवरः । एवं बुधे चंद्रयुते कन्याधनुमान॰ ॥ वक्रिणि सति तदा पंजरी भवति॰ ॥ ३५ ॥

सिते दलीले च चतुष्पदस्थे दृष्टः स्वरूपा-
नुगपक्षवृत्तिः ॥ बुधे तु चैवं तरणेरधःस्थे
वृत्तिं विधत्तेऽन्यतरैर्वयोभिः ॥ ३६ ॥

सिते दलीले इति । सिते दलीले शुक्रे कर्मपे चतुष्पदस्थे नीचगे वृषस्थेन दृष्टे तदा व्याघ्रपंजरी भवति । एवं बुधे कर्मदलीले सूर्याधःस्थे तदा बाल्यावस्थायामेव वृत्तिं करोति ३६॥

इति खचरबलं युतीक्षणाद्यं भवनबलं च
बुधोऽवधार्य सम्यक् ॥ धनकरमिह जातकेऽ-
भिदध्यात्किल नरजातिसधर्महस्तकर्म ॥ ३७ ॥

इति श्रीकर्मप्रकाशिकायां मनुष्यजातके हस्त-
कर्माधिकारः पंचदशः ॥ १५ ॥

इतीति । अमुना प्रकारेण खचरबलं ग्रहयोगग्रहदृष्ट्यादिकमादौ बुधः सम्यग्विचार्य भवनबलं च तदाश्रितराशिबलं

१ मृगयाम् ।

भावजवलं च विचार्य धनकरं किल इति निश्चयेन नरजाति सधम हस्तकर्म आभिदध्यात् । तेन कर्मणा धनलाभः । तदनुकूलाजातिवर्णाविकलता वा इह हस्तकर्म दिशतीति ॥ ३७ ॥
इति श्रीकर्मप्रकाशिकावृत्तौ हस्तकर्माधिकारः पंचदशः ॥१५॥

## अथ दारिद्र्याधिकारः ।

चंद्रे कुजक्षुतदृशार्कशशांकपुण्याधीशेषु दृग्विरहितेषु तनोश्च दुःस्थः ॥
अस्ते स्वरे धनगतेऽवनिपेऽपि केंद्रे
चानीक्षितेऽह्नि रविणा शशिना निशायाम् ॥ १ ॥

अथ दारिद्र्याधिकारो व्याख्यायते। चंद्रे इति। चंद्रं शत्रुदृशा कुजः पश्यति तदा दरिद्रः । सूर्यचंद्रपुण्यपा लग्नं न पश्यंति तदा दरिद्रः । वा सूर्यचंद्रपुण्यलग्नानि स्वस्वामिदृष्टिरहितानि तदा दुःस्थः । द्यूनेशे धनगे भूमिस्वामिनि केंद्रादन्यस्थे दिवा उभावपि सूर्यदृष्टिरहितौ तदा निःस्वः । एवं रात्रौ चंद्रदृष्टिरहितौ तदा वित्तहानिः ॥ १ ॥

क्रूरर्क्षगे क्रूरकुदृष्टिदृष्टे पुण्येतराण्यब्जशुभैश्च भिक्षुः ॥ केंद्रच्युते वा त्रिकगे दिवार्के
क्रूरार्दिते स्यात्सततं दरिद्रः ॥ २ ॥

क्रूरर्क्षग इति सद्मसादे चंद्रे क्रूरदृष्टे शुभैरदृष्टे तदा दरिद्रो भवति भिक्षुः । चंद्रः शुभः क्रूरार्दितः तदा भिक्षुः । दिवा सूर्ये केंद्ररहिते द्वितीयनवमगे क्रूरार्दिते सततं दरिद्रो भवति ॥ २ ॥

**क्रूरैः केंद्रे केंद्रहीनैश्च सौम्यैरस्ताभ्यस्तैर्दुर्गतः स्याच्च भिक्षुः ॥ पुण्येंदुभ्यां क्रूरिताभ्यां कुजार्क्योरिंदोर्युक्त्या खं विना सौम्यदृष्टिम् ॥ ३ ॥**

क्रूरैरिति। केंद्रे पापाः तदा दरिद्रः। शून्ये केंद्रे दरिद्रः। सौम्याः अस्तसमीपगाः तदा दुर्गतिर्भिक्षुर्भवति। चंद्रपुण्यसहमौ क्रूरार्दितौ तदा भिक्षुः। चंद्राद्दशमगे भौमः शनिदृष्टस्तदा दरिद्रः। चंद्राद्दशमः शनिर्भौमदृष्टः शुभदृष्टिहीनः तदा दरिद्रो भवति ॥ ३ ॥

**भौमे रिष्फगते विधौ च शनिना युक्ते कुजावेक्षिते हीने सौम्यदृशा व्यये तु सहमेनाञ्जेक्षिते क्रूरिते ॥ राकादर्शपयोर्व्ययारिगतयोः पापैश्च केंद्रस्थितैरिंदोः क्रूरखगांतरे रिपुदृशा क्रूरस्य भिक्षाटनम् ॥ ४ ॥**

भौम इति। भौमे रिष्फगते पापेक्षिते तदा दरिद्री। एवं चंद्रे शनियुते भौमदृष्टे तदा दरिद्रः। सौम्यदृशो हीनत्वादुभयत्र द्वादशगे पुण्यसहमे चंद्रधिष्टितेऽर्दिते तदा दरिद्रः। पौर्णिमामावस्यास्वामिनि षड्व्ययगे केंद्रगाः तदा दरिद्रः। चंद्रः क्रूरदृष्टः द्वयोः क्रूरयोर्मध्यगतस्तदा दरिद्रो भिक्षाटनं कुर्यात् ॥ ४ ॥

हिल्लाजे पतितेऽथ नीचगृहगे क्रूरेक्षिते चोडुपे पापान्मूसरिफेऽथ तन्मुथशिले भौमे सराफे भृशम् ॥ वित्ते वित्तपतावुभौ च पतिते क्रूरैश्च युक्तेक्षितौ दुःस्थो नित्यमसौम्ययोः पतितयोश्चार्केंदुहद्देशयोः ॥ ५ ॥

हिल्लाजेति । हिल्लाजः पतितस्थानस्थः क्रूरैर्दृष्टस्तदा दरिद्रः। हिल्लाजः नीचगृहगः क्रूरेक्षितः स्यात्तदा दरिद्रः । चंद्रे पापमुथशिले मूसरिफे तदा दरिद्रः । चंद्रे भौमे बली सराफे तदा दरिद्रः । वित्ते क्रूरेत्ते वित्तपतौ क्रूरस्थानगे एवं च उभावपि यदा क्रूरयुतौ क्रूरदृष्टौ च तदा दरिद्रः । सूर्येंदू हद्दपपतितस्थानस्थौ अशुभेक्षितौ शुभदृष्टिहीनौ तदा दरिद्रः स्यात् ॥ ५ ॥

केंद्रैः क्रूरशुभान्वितैः प्रथमतो दुःस्थस्ततः पुण्यतोऽथान्योऽन्यत्रिकगामिनोरपि च तत्प्राग्द्वित्रिराशीशयोः ॥ दृशे पुण्यतिथौ च पुण्यसहमे क्रूरार्दिते स्वामिषु स्वोच्चस्थेषु शुभांकितेषु शशिनि क्रूरोच्चसौम्यं गते ॥ ६ ॥

केंद्रैरिति । क्रूराः शुभाश्च केंद्रे तदा पूर्वं दरिद्रः पश्चाद्धनवान् । द्वितीयप्रथमराशिद्रेष्काणपाः राश्यधिपौ पश्यंतस्तदा स्थानांतरे धनं ददाति । धनपः प्रथमपत्रिभागस्य प्रथमपेन दृष्टः प्रथमपो धनपत्रिभागस्य धनपेन दृष्टस्तदा धनवान् ।

गतपर्वपुण्ये क्रूरिते तत्पतौ स्वगृहगेषु शुभदृष्टेषु पूर्वं दरिद्रः पश्चाद्धनवान् । गतपर्वपुण्ये क्रूरिते तत्पतौ स्वगृहगेषु शुभदृष्टेषु पूर्वं दरिद्रः पश्चाद्धनवान् । गतपर्वपुण्ये शुभे शुभदृष्टे तत्पतौ पापस्थानगे पापदृष्टे पूर्वं धनवत्ता पश्चाद्दारिद्रता । शशिनि क्रूरस्थानगे उच्चगे सौम्यदृष्टे तदा दारिद्र्यं भूत्वा पश्चाद्धनवृद्धिर्भविष्यति ॥ ६ ॥

चंद्रार्कांतरभागपंचदशकाधीशे बलिष्ठे गुरौ भूस्थे लग्नगपापदृश्यपि रवौ सार्के सशुक्रेऽथ वा ॥ दृष्टे चंद्रमसा दिवा दिनपतेर्नक्तं विधौ त्र्यृक्षपे क्रूरे भागपरे च कंटकगते स्वामीक्षिते निर्धनी ॥ ७ ॥

चंद्रेति । चंद्रदर्शनसमये क्रूरिते पतितभस्थे चंद्रादित्यांतरं भागः १५ चंद्रराशिस्वामी शुभदृष्टः स्नेऽधिकारिणि तदा भागशुभं पश्चात्सुखम् । गुरौ चतुर्थगे लग्नगे क्रूरेण दृष्टे पूर्वं शुभं पश्चादशुभम् । कवौ सार्को चतुर्थगे चंद्रदृष्टे पूर्वमसत्पश्चात्सुखम् । दिनजातके सूर्यः रात्रौ चंद्रः एषां त्रिराशिपानां स्वामिरोमृकोक्तौ क्रूरितौ केंद्रगतो स्वामिदृष्टौ सूर्ये प्राक् निर्धनी पश्चात्सुखी । चंद्रे प्राक् सुखी पश्चान्निर्धनी ॥ ७ ॥

चंद्रार्कत्रिकपे पुरा बलयुते पश्चाच्युते क्रूरिते पुण्ये पुण्यपतौ च कंटकगते शीतांशुनाशार्किणा ॥ क्रूरे वित्तगते प्रभौ च पतिते

## दग्धेऽत्यतिथ्योः सतोः क्रूरस्थे च विना कुजं ग्रहवशात्प्रांते दरिद्रागमः ॥ ८ ॥

चंद्रेति । चंद्रार्कयोर्द्रेष्काणेशे बलयुते क्रूरिते सति पुरा सुखी पश्चान्निर्धनी । चंद्रार्कयोर्द्रेष्काणेशौ शुभस्थानगौ बलरहितौ पापदृष्टौ तदा प्राक् किंचिद्धनं दत्त्वा पश्चान्निर्धनी । पुण्ये पुण्यपतौ च क्रूरिते कंटकगते प्राग्धनी पश्चात्सुखी । स्वामी पतितभस्थः दग्धो वा पर्वातलग्नपौ शुभस्थानगौ तदाऽशुभं पूर्वं पश्चाच्छुभम् । गतपर्वातलग्नपौ भौमं विना क्रूरितौ तदाऽशुभं पूर्वं पश्चाच्छुभम् । गतपर्वातलग्नपौ भौमं विना क्रूरेण क्रूरितौ तदा किंचिच्छुभं दत्त्वांते दारिद्र्यं ददाति ॥ ८ ॥

## चंद्रे क्रूरमुसरिफे क्रूरमुथशिले शुभं न चाद्यंतम् ॥ शुभमुसरिफे क्रूरमुथशिले प्राग्भिन्नमन्यथा वाच्यम् ॥ ९ ॥

## इति श्रीकर्मप्रकाशिकायां मनुष्यजातके षोडशो दारिद्र्याधिकारः ॥ १६ ॥

चंद्र इति । क्रूरेण मुसरिफे चंद्रे क्रूरेण मुथशिले च शुभदृशा हीने नितरां दरिद्रः । चंद्रे शुभमुसरिफे क्रूरमुथशिले तदा प्राक् शुभं पश्चादशुभम् । कर्मपे चंद्रे शुभमुथशिले क्रूरमुसरिफे-तदा प्राक् शुभं पश्चादशुभम् ॥ ९ ॥

इति कर्मप्रकाशिकावृत्तौ षोडशो दारिद्र्याधिकारः ॥ १६ ॥

## अथ सहजाधिकारः ।

मातुः सुतः प्रथम एष किमेकको वाऽ-
प्यन्ये भवंति सहजाः कति वा सुखं तैः ॥
वैरं नु वास्य धनिताप्यथ निर्धनत्वं
स्वभ्रातृतो भवति चास्य कति म्रियंते ॥ १ ॥

अथ सहजाधिकारो व्याख्यायते । मातुः सुत इति । अयं मातुः सुतः प्रथमो द्वितीयस्तृतीयः किमेकाकी वा कियंतो भ्रातरो भविष्यंति भगिन्यो वाऽयं भ्रातृणां द्वेष्टा वा तेऽस्य द्वेष्टारो भविष्यंति वा ते कति धनवंतः कति निर्धना वा सर्वे धनवंतोऽयं निर्धनो वाऽयं धनवांस्ते निर्धनाः तेषां साहाय्या-दयं धनी वास्य साहाय्यात्ते धनवंतो वा परस्परजानि धनानि हरंतीति वक्ष्यमाणप्रकारेण ज्ञातव्यम् ॥ १ ॥

भ्रातृर्क्षे सहमे मिथः पतियुते भूयस्तरा भ्रातर-
श्चैवं भ्रातृगते तु सद्मपतौ जीवंति पुण्ये
शुभे ॥ सूर्यार्क्यौगुरुभौमयोः शशिसुतस्यैषां
बले सत्फलं ज्यायो मध्यकनीयसां शशिसि-
तस्य स्यात्स्वसृणां क्रमात् ॥ २ ॥

भ्रातृर्क्षे इति । तृतीयभावस्वामी तृतीयगो भ्रातृसद्मेशो भ्रातृसद्मगस्तदा बलिनो भूयो भ्रातरो भविष्यंति । भ्रातृसद्मेशे

तृतीयभावगे तदा वलिष्ठे पुण्यसद्मेशे तदा बहवो जीवंति । सूर्यशन्योः सबलयोः सतोर्ज्येष्ठस्य शुभम् । बृहस्पतिभौमयोर्बलेन मध्यमस्य शुभम् । बुधो बलिष्ठः तदा कनिष्ठस्य शुभम् । चंद्रेण ज्येष्ठभगिन्याः शुभम् शुक्रेण कनिष्ठभगिन्याः सुखम्॥२॥

लग्ने भ्रातृनवांशपे प्रथमकः खे प्राक् चतुर्थेऽर्थवान्द्यूने प्रागथ सप्तमे तनुनभोऽतःखेटहीनेऽग्रजः ॥ लग्नस्थैः शुभखेचरैर्द्युजनने केचिच्छुभाः सोदराः क्रूरैस्तैर्मृतिरग्रजस्य सहजाधीशे तनौ नानुजः ॥ ३ ॥

लग्न इति । भ्रातृनवांशपो लग्नस्थः तदा प्रथमः । एवं दशमे सति तदा प्रथमः तुर्येऽर्थवान् भवति । अथ सप्तमे तदा प्रथमः सप्तमो वा । लग्नदशमोभ्यांशावधि कोऽपि ग्रहो नास्ति तदा प्रथमः । अथ लग्नस्था शुभग्रहाः दिवा जन्म तदा केचित्सोदराः शुभाः केचिदशुभाः । लग्नस्थाः पापास्तदा ज्येष्ठानां मृत्युं कनिष्ठः पश्यति । सहजेशे लग्ने तदाऽनुजो न भ्रातृहीनः ॥ ३ ॥

वृक्षे राहुशिरःस्थिते गुरुसितार्कैः सेंदुभिश्चेक्षिते भ्रातृणां सहमेऽवनौ च बहवः पुण्यान्विता भ्रातरः ॥ तन्नाथे बहुसूतिकेऽवनिन-

भोयाते तथैवं गुणाः पुंसीज्यज्ञकुजार्किभिः शनिसितैर्धन्या भगिन्यः स्त्रियाम् ॥ ४ ॥

स्पृक्षे इति । तृतीयपस्तृतीयस्थः पुण्यसहमं पश्यति तदा बहवो भ्रातरः । राहुं तृतीयस्थानास्थितं लग्नात्सर्पोसितगुरुचंद्राः पश्यंति तदा बहवः पुण्यान्विताः भ्रातरः । भ्रातृसद्मचतुर्थस्वामी बलवान्स्वयमपि तदा बहवो भ्रातरः । भ्रातृसहमपः बहुमसूतिराशिगस्तदा बहवो भ्रातरः । भ्रातृसद्मपश्चतुर्थस्तदा स्वल्पा भ्रातरः । अयं दशमे तदा बहवः । पुरुषराशिसंबंधो भ्रातृभाग्यविषये द्रष्टव्यः । गुरुचंद्रकुजशनिबुधा बलिनः स्त्रीराशौ स्थितास्तदा भगिन्यो बह्वयः राशिभिस्तैर्धन्या भगिन्यः पुरुषराशौ भ्रातरो बहवो धन्याः ॥ ४ ॥

भ्रात्रीशे सबले सिते शुभयुते भौमे नवांशाधिपे लग्ने खे सहजेश्वरे सहमपे चानेकशः सोदराः ॥ शुक्रे योषिति जामयः शशिबले मंदाकुजाच्च स्वसुर्वृद्धायाः शुभमिंदुभे सितगते लब्ध्वा बलोन्मानतः ॥ ५ ॥

भ्रात्रीशे इति । सबले शुक्रे भ्रात्रीशे शुभयुतदृष्टे तदा बहवो भ्रातरः । भौमे नवांशाधिपे तृतीयनवांशे भौमे बहुप्रसवराशौ लग्ने दशमगे वा तदा बहवो भ्रातरः । सहजपे सहमपे च लग्ने दशमे वा तदानेकशो भ्रातरः । एवं शुक्रे स्त्री

राशिगे वलिनि चंद्रे सति जामयः धन्या भगिन्यः । एवं शनिचंद्रौ बलिनौ वृद्धभगिनीतो भाग्यम् । एवं चंद्रारौ बलिनौ स्त्रीराशौ तदा वृद्धभगिनीतो भाग्यम् । शुक्रश्चंद्रगृहे बली तदा लघुभगिनीतः[3] शुभम् ॥ ५ ॥

पापैर्लग्नवांशतत्प्रथमतद्व्यंशेश्वरैर्विक्रमे
जायंते न सहोदरा यदि भवंत्याशु म्रियंते ततः ॥
स्त्रीभेऽर्कार्किमहीसुतैश्च पतितैर्मृत्यौ च सभ्रातृपे
सक्रूरे सहमे च सोदरमृतिश्चैवं स्वसॄणामपि ॥ ६ ॥

पापैरिति । लग्नगतमुसलहेशस्तस्मात्पूर्वापरमुसलहेशौ तृतीयस्थानगौ तदा नैव भ्रातरः यदि भवंति चेदाशु म्रियंते । शनिभौमार्काः स्त्रीराशिस्थाः यदि नभस्थाः बलरहिताश्चेद्भ्रातरो नैव । भ्रातृपे मृत्युगते तदा भ्रातृसुखं न । भ्रातृसहमे शनियुते क्रूरेणारिदृशा दृष्टे तदा भ्रातरो म्रियंते । भ्रातृसद्मक्रूरैर्युतं तदा भ्रातॄणां मृतिः । एवं पूर्वोक्तयोगाः स्त्रीराशिमाश्रितास्तदा भगिन्यो नैव स्युः स्युश्चेत्तासां मृतिश्च स्यात् ॥ ६ ॥

सूर्यार्क्योर्बुधभौमयोर्भृगुमहीसून्वोस्तृतीयस्थयोर्मृत्युर्ज्येष्ठकनिष्ठसोदरलघुस्वस्राश्रयः स्यात्क्रमात् ॥ सर्वैस्तैरशुभैश्च दग्धपतितैः

---

१ सर्वसहोदरेभ्योऽपि ज्येष्ठा । २ स्वस्मादेव ज्येष्ठा । ३ कनिष्ठभगिन्याः ।

सर्वात्ययः क्रूरितेऽप्येवं लग्नसुखांतरालतनु-
खांतस्थैर्भुवोऽधोंऽशपाः ॥ ७ ॥

सूर्याकर्योरिति। शन्यर्कौ सहजगौ बलादितौ तदा ज्येष्ठभ्रा-तृविनाशः। बुधारौ सहजगौ निर्बलौ तदा कनिष्ठभ्रातृनाशः। शुक्रारौ सहजगौ निर्बलौ तदा लघुभगिन्या अत्ययः। तैः सर्वैरपि क्रूरितैर्नीचस्थानगैस्तदा सर्वेषामत्ययः। लग्नचतुर्थमध्ये यदि पापा भवंति तदा भ्रातृणामशुभम्। लग्नदशममध्ये-ऽप्येवम्। सहजनवांशपः सहमं च भूमेरधश्चतुर्थस्थानादधः पंचमादिस्थस्तदा भ्रातृणामशुभम् ॥ ७ ॥

भ्रातृभ्रातृपतौ बलिन्युदयपभ्रातुर्धनाप्तिर्भवे-
देवं तत्सहमे पतौ बलयुते लग्नेश्वरे निर्बले ॥
भ्रातृणां स्वधनं च विक्रमपतौ सद्वेश्मगेऽब्जा-
न्विते क्रूरान्मूसरिफोदिते च सहजैः प्रीति-
र्मिथः स्यात्सदा ॥ ८ ॥

भ्रातृभ्रातृपताविति। भ्रातृसद्मपः तृतीयगः लग्नपश्च एते बलिनः उदिताः शुभदृष्टास्तदा भ्रातृतो धनाप्तिः। भ्रातृसद्म-तदीशश्च बलिनो लग्नेशो दुर्बलस्तदास्य धनं भ्रातरो गृह्णंति। सहजपः शुभस्थानगः उदितो वा सचंद्रः क्रूरेण मूसरिफस्तदा सहजानां प्रीतिरेकत्रावस्थानमिति ॥ ८ ॥

भ्रातृस्थे बलिनि ग्रहे द्वयसुखं हिल्लाजदृष्ट्या-
धिका प्रीतिस्तत्सहमे तृतीयनवमायस्थे

तदीशे तनौ ॥ दृग्वीर्ये दिशति प्रयाति गुरुता भ्रातृप्रदः सव्यया वर्धते सहजाः सुतस्थसहमे सर्वे भुजाः स्वानुगाः ॥ ९ ॥

भ्रातृस्थे इति । सहजस्थो ग्रहो वली तदा भ्रातृणा सुखम् । भ्रातृस्थेन ग्रहेण पूर्णदृष्ट्या हिल्लाजो दृष्टः तदाऽधिका प्रीतिः । भ्रातृसद्मतृतीयनवमायस्थं शुभदृष्टमशुभहीनं भ्रातृसद्मपो लग्ने तदा तेषां सुखम् । लग्नसहजपयोरन्यः कश्चिद्वली स्वोबस्थो भूत्वोभयायारत्थशालं करोति तदा भ्रातृष्वतीवोत्कर्षः स्नेहश्च । सहजपसहमपयोर्लग्नेशात्सव्ययास्तदा भ्रातरो वर्धते स सहमपः पचमस्थः तदा भ्रातरः सुभगाः ॥ ९ ॥

वित्तस्थे सहमे त्रिगे धनपतौ स्वभ्रातृवर्गा-स्त्रिभे लग्नभ्रातृनवांशपेश्च बलिभिर्ज्येष्ठांत-रस्थानुजाः ॥ धन्याः स्युर्विपरीतगे गतधनाः स्त्रीशे तु वैरं व्यये त्र्यक्षे चार्कियुते महीसुत-दृशा राठेज्यंयुक्ते शुचे ॥ १० ॥

वित्तस्थे इति । द्वितीयगो भ्रातृसहमधनपः सहजगः तदा स्वानुगाः सहजाः । सहजनवांशेशाः तृतीयनवमगा बलिष्ठाः तदा ज्येष्ठानुजाः धन्याश्च भवंति । एतस्माद्विपरीतगाः तदा गतधना

---

१ राहो राठिनापुरे जन्म प्रसिद्धम् ।

भ्रातरः । भ्रात्रीशे व्ययगे परस्परं शत्रवः । शनियुते तृतीये भौमदृष्टे राहुयुते शोकाय ते भ्रातरो निमित्तं भवेयुः ॥ १० ॥

तुर्येऽन्त्ये सहमे यमार्यममहीपुत्रेंदुदृष्ट्या मिथो वैरं तैर्झकटश्च लग्नपशशीज्यारेक्षणाच्च त्रिपे ॥ लग्नान्मूसरिफेऽरिगस्य च तुलागोस्थे त्रिगारेक्षिते सूर्ये शुक्रविदोश्च सर्वसहजा भ्रातृच्छलाद्वैरिणः ॥ ११ ॥

तुर्येऽन्त्ये इति । सहमे चतुर्थे द्वादशे शनिसूर्यभौमचंद्रैर्दृष्टे तदा मिथो वैरम् । एवं सहमेशे लग्नपचंद्रगुरुभौमैर्दृष्टे तदा झकटम् । तृतीयेशो लग्नेशं मूसरिफं करोति तदा वैरम् । सहजेपे षष्ठगते तुलावृषमाश्रित्यतृतीयांगारेण दृष्टे वैरम् । भ्रातृस्थानाद्बुधशुक्रौ चतुर्थे तदा भ्रातरः उक्तं न कुर्वंति ॥ ११ ॥

त्र्यृक्षे क्रूरयुतौ धने च सहमे भानोरधः क्रूरिते षष्ठस्थेऽत्र शनेर्दशागतधनश्चांत्ये नृपक्षेपकाः ॥ दूरस्था नवमास्थिते त्रितनुपा दृष्ट्या च सादृग्भोः सादृस्याथ दृशा च विक्रमगते क्रूरे च ते विह्वलाः ॥ १२ ॥

त्र्यृक्षे इति । तृतीयगृहे क्रूरयुते सहमं च तदा गतधना भ्रातरो भवंति । भ्रातृसहमं धनगतं क्रूरितं सूर्यादधःस्थं तदा

भ्रातृकपटेन वरम् । सहजसहमं षष्ठस्थं शनिना क्रूरितं तदा भ्रातरो भवनप्रायाः । सहजसह्मक्रूरयुतं षष्ठस्थं तदा भ्रातरो नीचकर्माणः । सहजसहमे व्ययगे स्वामिदृष्टे राज्ञा दूतो भवति पुण्यसह्मक्रूरिते लग्नाहूरस्थे तदा भ्रातृणा मेलापकं न करोति । लग्नपो भ्रातृस्थानं न पश्यति सहमपः सहमं न पश्यति तदा एकस्थानावस्थायित्वं न भवति । नवमे भ्रातृसहमे सादेशेन त्रितनुगृहस्थेन दृष्टे तदा भ्रात्रोरेकदेशावस्थानं न । विक्रमग-वक्रेण सहमे दृष्टे तदा भ्रातरः विह्वलाः स्युः ॥ १२ ॥

भूर्ध्वं स्थिते तनुनवांशपतौ हि तस्मा-
द्यावत्तनुर्गणनया सममंतरर्क्षैः ॥
भूमेरधःस्थितवतीह तनोस्तमेवं
संख्या भवंति सहजा द्वितनौ द्विरूपाः ॥ १३ ॥

भूर्ध्वं स्थिते इति । कुत्थसेनोक्तम् । लग्नमुसल्लहस्वामी भूर्ध्वं तिष्ठति तदारंभलग्नपर्यंतं यावानाशयः वा तत्संख्याकान् भ्रातॄनेव वदेत्तत्तन्मध्ये यावत्यो द्विःस्वभावराशयस्तत्र तत्र द्वौ द्वौ । अथ सः भूमेरधोलग्नादारभ्य तदवधि यावंतो राशयस्तावत्संख्यातरः ॥ १३ ॥

भ्रात्रंशके पितृगृहे सहमस्य भागे
तस्याधिपे पुरुषभे पुरुषे पितुश्च ॥

भ्रातुः शुभं भवति भे युवतौ च शुक्रे
स्वस्थो रतिर्ग्रहबलादिति कुत्थसेनः ॥ १४ ॥
इति कर्मप्रकाशिकायां मनुष्यजातके सप्तदशः
सहजाधिकारः ॥ १७ ॥

भ्रात्रंशके इति । भ्रातृनवांशराशिः पितृगृहे सहमस्थन-
वांशे तस्याधिपे सहमाधिपे पुरुषराशौ स्वयं पुंग्रहाः तदा
पितृमातृणामतीव सौख्यम् । स चेच्छुक्रः स्त्रीराशौ तदा
पितृभगिन्याः सुखम् । इत्यादि ग्रहबलादुन्नेयम् ॥ १४ ॥
इति कर्मप्रकाशिकावृत्तौ सप्तदशः सहजाधिकारः ॥ १७ ॥

## अथ पित्रोररिष्टाधिकारः ।

पितृसहमे तदीशतुर्याधिपतदधिष्ठितखेटमं-
दसूर्यैः ॥ पितुरथ स्वस्वनाथमातृसदाधि-
पतिभिराख्यतमेवं जनन्याः ॥ १ ॥

पितृसहमे इति । पितृगृहं पितृसहमं तदंशौ च तत्र
स्थिता ग्रहाः रविशनी च तेषां शुभाशुभत्वेन पितुः शुभाशुभे
एवमेव दशमं दशमेशश्च मातृसहमं मातृसहमेशः एषां शुभत्वेन
मातुः शुभाशुभं वाच्यम् ॥ १ ॥

स्त्रीभे केन्द्रे शुभस्थे शशिनि समनृभेऽर्कदु-
युक्त्या कुजेन्द्रोर्जीवालोके च नीरुक्जगृहग-

तनौ ज्ञे च चंद्रे बलाढ्यौ ॥ लग्नेऽर्के स्वांशकस्थे शुभदृशि युवतौ ज्ञाब्जयोगे नृराशौ जीवेंद्वोर्लग्नखस्थार्कसमशशिदृशा शीघ्रमेव प्रसूते ॥ २ ॥

स्त्रीभे इति । स्त्रीराशौ शुभस्थे चंद्रे केंद्रे सति मातुः शुभम् । समराशिस्थचंद्रः विषमराशिस्थमर्कं पश्यति तदा मातृपितृसुखम् । वियोगेन कुजेंद्वोर्जीवालोके रोगराहित्यं शीघ्रं प्रसूतिश्च । बुधो भौमराशिमाश्रित्य लग्ने तिष्ठति चंद्रो बलयुतः तदा शीघ्रं प्रसवः । स्त्रीराशौ ज्ञाब्जयोर्योगे शुभैर्दृष्टे शीघ्रं प्रसवः । जीवेंदू लग्नगौ दशमगेन सूर्येण दृष्टौ तदा शीघ्रं प्रसवः । दशमगे सूर्ये चंद्रस्य सप्तमदृशा दृष्टे तदा शीघ्रं प्रसवः ॥ २ ॥

चंद्रेऽन्त्यगे मुसरिफेऽथ झपाद्रवींदुलग्नेश्वरेष्वशुभवक्रितभास्थितेषु ॥
शुक्रेंदुभानुषु मृगेंद्रघटालिगेषु
केंद्रे शनौ च विषमेण चिरात्प्रसूते ॥ ३ ॥

चंद्रेऽन्त्यगे इति । द्वादशगश्चंद्रः क्रूरेण दृष्टः तदा विलंबेन प्रसूतिः । द्वादशगश्चंद्रो मीनगेन क्रूरेण मुसरिफः तदाऽतिकष्टेन प्रसवः । सूर्यचंद्रलग्नपाः वक्रिताः क्रूरस्य राशिगास्तदा कष्टेन प्रसवः । शुक्रः सिंहे शुक्रचंद्रौ कुंभे भानुर्वृश्चिके तदा कष्टेन

सवः । शनिः केंद्रे तदा कष्टेन स्थिरा प्रसूतिः । चंद्रो वक्र-राशौ चतुर्थे क्रूराः पश्यंति तदा योगः ॥ ३ ॥

पित्र्ये गृहेऽथ सहमे बलिनीक्षवाले
तुर्ये गुरौ तदधिपेऽथ पितुः प्रभुत्वम् ॥
आद्ये च तत्सहमगे प्रथितः पिता स्या-
त्स्वोच्चेः स्वहर्पगविधौ पितृमातृसौख्यम् ॥ ४ ॥

पित्र्ये इति । पित्र्ये गृहे सबले सहमे ईक्षवाले चतुर्थगे गुरौ पितुः प्रभुत्वम् । एवमेव मातृसहमात्तदा दशमान्मात्राधिपे बलिनीक्षवालगेऽपि मातृसहमपे बलिनि सति पितुर्मातुः प्रभुत्वम् । पितृसहमे सौम्यदृष्टे एकादशगे तदा पिता प्रसिद्धः । स्वोच्चस्थः स्वहर्षगः चंद्रः तदा पितृमातृसौख्यम् ॥ ४ ॥

सौम्यग्रहौजसि गते सहमद्वयोर्द्वे
व्योमस्थसूर्यगुरुसौरिषु तुर्यहक्षु ॥
सूर्यर्क्षगेऽर्कतनयेऽह्नि शुभानि पित्रोः
शुक्राब्जयोः सुहृदवेक्षणतस्तु मातुः ॥ ५ ॥

सौम्यग्रहौजसीति । मातृपितृसहमे सौम्यदृष्टे शुभस्थानगे तदा मातृपितृनायकत्वम् । दशमगाः सूर्यगुरुशनयः चतुर्थस्थं मातृसद्मं पश्यंति तदा योगः । सिंहगः शनि शुभस्थानगः

१ वक्रो नाम भौमः तस्य राशिर्वृश्चिकः । २ कष्टप्रसवयोग इत्यर्थः ।
३ मातृपित्रोः प्रभुत्वयोगः ।

दिनजातके मातृपित्रोः शुभं तद्वनं च । व्ययगौ चंद्रशुक्रौ चतुर्थस्थौ मातृमद्मपं पश्यन्तिस्तदा मातुः सुखम् ॥ ५ ॥

सूर्ये व्ययेऽनाधिकृते पितृमातृखेटे
नीचौ जनौ सुहृदि नीचविधौ च माता ॥
केंद्रे च्युते शशिपतौ जनकः सुहृत्पे
रिष्फेरवीक्षितविधावधमा सवित्री ॥ ६ ॥

सूर्ये व्यये इति । अधिकारहीने सूर्ये व्ययगे दिवा पितुः शुभम् । मातापितृदलीलौ व्ययेशनीचस्थितौ तदा पितरौ नीचौ । नीचगौ चतुर्थे तदा मातृनीचत्वम् । केंद्रच्युतोऽधिकाररहितः चंद्रपस्तदा माता नीचसेवकी च । चतुर्थेशे व्ययगे पिता । द्वादशगं चंद्रं सूर्यः पश्यति तदा माता नीचसेविनी भवेत् ॥ ६ ॥

सूर्यस्य वप्रहमुशल्लहयोश्च साद्दे
क्रूरेक्षितेषु रिपुभे जनको हि नीचः ॥
माता विधोः शरविलग्नवांशपेन
भास्वद्युजांत्यपतिनी च पिता भुजिष्यः ॥ ७ ॥

सूर्यस्येति । पितृसहमपस्य द्वादशांशनवमांशानामधिपाः षष्ठस्थाः क्रूरदृष्टास्तदा पिता नीचः । दिवा जन्मनि एव चंद्रमातृसहमद्वादशांशनवमांशानामधिपाः क्रूरिताः शत्रुगा नीचगा वा तदा माता नीचा । रात्रौ एवमन्यथापि द्वादशाधिपेन युते सूर्ये पिता भुजिष्यः दासः ॥ ७ ॥

पित्रोरुपर्यशुभतेजसि पापदृष्टे
दृष्टे च कुत्सिततनू पितरौ द्विपापे ॥
तुर्ये शुभेषु पतितेषु विदेश्यनीचौ
स्त्रीभे शनौ कुजयुते द्वितयं भुजिष्यम् ॥ ८ ॥

पित्रोरुपरीति । पित्राधिपयोरुपर्यशुभस्य तेजः पापदृष्टौ दृष्टौ तदा मातापितरौ कुत्सितांगौ । द्विपापे चतुर्थे शुभाः षष्ठाष्टमव्ययगाः तदा विदेशगौ नीचौ । रात्रौ शनिः स्त्रीराशिगः कुजयुतः शुक्रः पुंराशिगः पापयुतस्तदा भुजिष्यौ ॥८॥

राकाकुहूदयरवींदुकृतेत्थशाले:
क्रूरैः स्वनीचपतितैः पितरौ न तुल्यौ ॥
वक्रर्क्षगैरुपरि लग्नपभागमेक
दृश्यौ न चेदिनतनू रजनीशदृग्भिः ॥ ९ ॥

राका इति । गतपर्वातलग्नं रवींदुभ्यां स्वनीचपतिताः क्रूराः इत्थशालं कुर्वंति तदा समानजातिकौ पितरौ न । वक्रर्क्षगैः क्रूरैर्लग्नपस्यांशोपरि तेजः क्षिपंति तदा तौ दृश्यौ न । चंद्रसूर्यलग्नानि यदि न स्वामिदृष्टानि तदा न दृश्यौ समानजातिकौ ॥ ९ ॥

सूर्ये कुजस्य दिवसे निशि वा सितस्य
दृष्टे विधौ च पितृवैरमसौम्यदृष्ट्या ॥

सादे तयोर्व्ययंगते तनुतूर्यसाद्-
नाथार्कसौरिषु मिथः समदृक्षु चैवम् ॥ १० ॥

सूर्ये कुजस्येति । मातापित्रोः परस्परं स्नेहः । असुखं वा तेषां योगाः । दिनजातके सूर्यः भौमदृदाया रात्रिजातके सितस्य द्दृपं चंद्रं सौम्या न पश्यंति । तदा शकटः चौर्यं च । पितृमातृसद्मं द्वादशस्थं शुभदृष्टिरहितं तदा जातकेन सह वैरं करोति । लग्नेशश्चतुर्थभवः पितृसद्मपः शनिसूर्ये दिनजातके परस्परं सप्तमदृष्ट्या पश्यंति तदा वैरं करोति । पिता एव लग्नपः दशमपः मातृसद्मपः चंद्रश्च रात्रौ जन्म परस्परं सप्तमदृष्ट्या पश्यतः तदा बालो मात्रा सह वैरं करोति ॥ १० ॥

तुर्ये रवौ कुजयुते पितरौ सुतेन
द्वेषोन्मुखौ रविनवांशपतौ कुगेहे ॥
क्रूरेक्षिते च तनयं त्यजतो व्रतस्तु
मंदेज्ययोरुपरिगोर्ध्वगयोर्मिथः खे ॥ ११ ॥

तुर्ये इति । चतुर्थगोऽर्कः भौमेन सह शुभदृष्टिवर्जितः तदा मातापितरौ सुतेन सह द्वेष्यौ । दिनजातके सूर्यसुसद्महस्वामी लग्नात्षष्ठव्ययगतः क्रूरैः शत्रुदृशा दृष्टः तदा जातकं त्यजति । शनिगुरू दशमे परस्परमंशैः कृत्वा ऊर्ध्वगौ तदा जातं त्यजतः ॥ ११ ॥

पितृग्रहेण समतुर्यदृशा विलग्ने
जाताधिकारिणि च पितृगृहेऽस्तमासे ॥

जातो विनश्यति च दुःस्थचरो भुवोऽर्धः
पक्षद्वयाधिकृतभूसरिफेऽन्यपोष्यः ॥ १२ ॥

पितृग्रहेणेति । पित्रेशः पितृसद्मपः सप्तमदृष्ट्या चतुर्थदृष्ट्या लग्नं पश्यति तदा जातकं सुतं त्याजयति । मातापितृगृहे यो ग्रहः स्वाधिकारी अस्तगः तदा जातो नश्यति । पीडिते ग्रहे पंचमगे पितृग्रहेण भूसरिफे तदाऽन्यपोष्यः भवेत् ॥१२॥

सार्केंदुराशिधनगेन सितेन पित्रो-
र्वित्ताप्तिरर्कगुरुतुल्यदृशा तदेष्यम् ॥
क्रोडेऽर्कसौम्यदृशि जातकखेचरैश्च
पित्र्येभ्य ऊर्जिततरैर्धनपे च रंध्रे ॥ १३ ॥

सार्केंद्विति । अर्कश्चेंदुश्चार्केंदू अर्केंदुभ्यां सहितः सार्केंदुश्चासौ राशिश्च सार्केंदुराशिः सार्केंदुराशिधनगे शुक्रे सूर्ययुते कर्कराशिस्थे वा राशिधनगे तदा शुभदृष्टे पितृद्रव्याप्तिः । शुक्रे कर्कराशिस्थिते कामी । सचंद्रकर्कराशिगे शुक्रे धनगते तदा मातृपक्षाद्धनाप्तिः । एवं शुक्रे सूर्यगुरुभ्यां सममदृष्ट्या दृष्टे तदा धनाप्तिः । सूर्यः मित्रदृष्ट्या शनिं पश्यति तदा पितृद्रव्यं प्राप्नोति । जातकखेचरः पुण्यलग्नपादेशाजाः पितृग्रहाः सूर्यशनिचतुर्थदशमशुक्रचंद्रमातृसद्मपेभ्यः जातकखेचराः अधिकबलाः धनपश्चाच्चिद्रति धनपेऽष्टमपेऽष्टमे सति तदा जातकः पितृद्रव्यं लब्धमपि नाशयति ॥ १३ ॥

अंत्येऽर्कवद्वादशनैश्वरयोश्चतुर्थे
क्रूरान्विते़ऽथ तदवेक्षितसूर्ययुक्ते ॥
वित्ते रवावशुभिते सितगोरधःस्थे
मंदेऽर्कसूसरिफिते च पिता हि वैरी ॥ १४ ॥

अंत्ये इति । सूर्यस्य द्वादशांशराशिद्वादशस्थाने क्रूरिते पितृद्रव्यं नाशयति । यदि शनिर्द्वादशस्थः तदा पितृद्रव्यं नाशयति । क्रूरश्चतुर्थगः पीडितः सौम्यदृष्टिरहितः तदा पितृद्रव्यं नाशयति । सूर्यश्चतुर्थगः क्रूरैर्दृष्टः तदा पितृद्रव्यं कार्यं च नाशयति । द्वितीयगः सूर्यः क्रूरितः तदा पितृवित्तं नाशयति । द्वितीयगश्चंद्रः क्रूरितः मातृवित्तं नाशयति । रात्रौ मंदेऽर्केण मूसरिफे तदा पिता वैरी ॥ १४ ॥

सभौमभानौ शशिसर्वदृष्टे मंदेऽर्कयुक्ते च कुजेऽतिमस्थे ॥ जातो वृथा नाशयते पितुः स्वं मातुस्तथा शुक्रशशांकयुक्ते ॥ १५ ॥

सभौमेति । सभौमेऽर्के चंद्रेण सप्तमदृशा दृष्टे पितृवित्तं वृथा नाशयति । षष्ठेऽर्के मातृद्रव्यं नाशयति । षष्ठेऽर्के द्वादशगेन भौमेन दृष्टे शुभदृशा हीने पितृद्रव्यं नाशयति । सभौमे चंद्रे सूर्येण पूर्णदृशा दृष्टे मातृद्रव्यं नाशयति । षष्ठगे चंद्रे द्वादशगेन भौमेन दृष्टे तदा मातृद्रव्यं नाशयति । एवं शुक्रतोऽपि ज्ञेयम् ॥ १५ ॥

तुर्ये तत्सहमे पतौ च शुभगे पित्रोर्धनाप्तिः सुतात्सद्दृष्टे तरणौ दिवा च गुरुणा त्र्यंशेक्षिते व्यंशगे ॥ रात्रौ खे सशनौ शुभे तु सहमे तुर्येश्वरे केंद्रगे मंदे सूर्यसुसद्महेऽब्जसितयोः खे चेंदुदृष्ट्या कुजे ॥ १६ ॥

अथ पितृद्रव्यप्रदयोगाः । तुर्ये इति । तुर्ये शुभे पितृसहमं शुभस्थानगं शुभयुतग्रहदृष्टं तत्पतौ शुभयुतदृष्टे तदा पिता पुत्रद्वारा धनं प्राप्नोति । सूर्ये शुभदृग्गे दिवा जन्मनि तदा पितृस्वम् । सूर्ये गुरुनवांशगते गुरुणा त्रिभागषड्भागदृशा दृष्टे तदाऽस्य कार्यसमये पित्रोः शोभनकालः । रात्रौ शनिदृशमे तदा पित्रोः शुभम् । मातृपितृसहमे बलिनि शुभैर्दृष्टे पापदृष्टिरहिते मातापित्राख्या कुलता । तुर्यपे केंद्रे बलिनि तदा शुभम् । उच्चगे सति प्राधान्यपदप्राप्तिश्च । मंदे सिंहनवांशगते तदा पितुः शुभम् । चंद्रशुक्रौ दशमगौ तदा मातापित्रोः शुभम् । खेंदे भौमे खपदगे चंद्रदृष्टे पित्रोः शुभम् ॥ १६ ॥

अथ पित्रोः कष्टयोगः ।

दग्धेः सूर्यशशांकहृद्दपतिभिः क्रूरेक्षितैः सूर्यपे क्रूरे द्यूनगृहे रवींदुरिहशांकद्योरिह क्रूरयोः ॥ सूर्योक्योर्ध्वनिशं क्रमाद्विबलयोः

पित्रोर्वयोदुर्गतिर्मंदे भास्करसंमुखे पितृगदः सेंदौ कुजे मातृरुक् ॥ १७ ॥

अथ पित्रोः कष्टयोगानाह–दग्धेति । सूर्यशशांकदृक्पाः क्रूरिता दग्धाः शुभदृष्टिहीनाः तदा मातापितरौ निरुद्योगिनौ भवतः । सूर्येंदौ सप्तमगे क्रूरिते सूर्येंदुभ्यामरिदृशा दृष्टे तदा पित्रोः कष्टम् । अर्केंद्वोः क्रूरेत्थशालिनोर्मातापित्रोः कष्टम् । सूर्ये सप्तमगे क्रूरिते मातुः कष्टम् । दिनजातके सूर्यो रात्रा शनिश्च बलहीनौ दग्धौ क्रूरितौ तदा पितुः कष्टम् । रवेः शनैश्चरः सप्तमः तदा पितृरोगः । चंद्रे भौमे मातृरुक् माता कष्टेन जीवति ॥ १७ ॥

सूर्येंद्वो रविजेऽह्नि सीदति पिता पूर्णांकुहूमध्यगे भौमे चाशुभदृग्गे द्विजपतौ माता परप्रेष्यभुक् ॥ सूर्याब्जर्क्षगता शुभे द्व्यगता दौःस्थ्यं द्विषष्ठांत्यगे तद्भावाधिपतौ रुजा नयनयोर्भौमार्किदृष्ट्यापदः ॥ १८ ॥

सूर्येंद्वोरिति । सूर्याद्द्वादशगे शनौ दिवा जन्म तदा पिता मृत्युं प्राप्नोति । गतपर्वांतलग्ने भौमे चंद्रः क्रूरदृष्टया तदा माता परसंचरी । सूर्येंद्वोर्मे सिंहकर्के क्रूरिते पितृमात्रोः कष्टम् । सूर्यचंद्राश्रितराशिपौ दग्धौ क्रूरितौ तदा पितृमातृकष्टम् । सूर्यचंद्रमुसल्लहेशौ द्विषष्ठांत्यगतौ पितृमात्रोर्नेत्ररोगः । चंद्रौमशनिभ्यां दृष्टौ तदाऽपवादः ॥ १८ ॥

अथ पित्रोर्मृत्युयोगः ।

सूर्यार्क्योः शशिसौरिवित्सु च सुहृद्द्वारेण युक्ते क्रमात्पित्रोर्मृत्युरथाष्टमे पितृपतौ क्रूरेक्षितेऽल्पस्थितिः ॥ भौमार्कौपरिगेऽह्नि सा पितृवधः केंद्रे रवौ वक्रितः स्वांशेशेन युते च शन्यभिमुखे तद्वे कुजे कष्टतः ॥ १९ ॥

अथ पित्रोर्मृत्युयोगानाह–सूर्यार्क्योरिति । सूर्यशनी चतुर्थे सभौमौ शुभदृशा हीनौ तदा पितृमरणम् । चंद्रभौमबुधशनयः चतुर्थगाः शुभदृष्टिहीनास्तदा पितृमरणम् । चतुर्थेशेऽष्टमगे लग्नाच्छुभदृशा हीने क्रूरेक्षिते योगः । अर्काद्द्वादशगे भौमे खड्गेन पितृवधः । केंद्रगे रवौ वक्रिते स्वनवांशपेन युते तदा पितृमरणम् । मंदसम्मुखे रवौ शुभदृशा हीने तदा मृत्युः । सूर्यगृहे भौमे कष्टतो मृत्युः । चंद्रगृहगे भौमे शुभदृशा हीने मातृमरणं वेदितव्यम् ॥ १९ ॥

स्वं स्वं स्थानमपेक्षितौ शुभयुतौ पित्रोश्च मृत्युप्रदौ पित्रीशौ तत्सहमाधिपौ च हृद्पौ लग्ने च मृत्युस्तयोः ॥ शीतांशौ तरणेरसौ-

---

१ अत्र श्लोके अर्थसंबंधेन पादपट्केऽपि न दोषः अर्थैकपरिनिष्ठत्वात् ।

म्यामिलिते वपुश्च पूर्णतरा मातुर्मृत्युरदोगृहे शनिकुजाक्रांतेऽनृजौ तत्पतौ ॥ सा देशे च विलग्नसादृद्दशि तन्नाशः पथि क्रूरिते कुस्थाने सहमेऽस्य हृद्पतिते क्रूरे तदल्पस्थितिः ॥ २० ॥

स्वमिति । आपूर्यमाणे चंद्रे क्रूरिते तदा पितृमरणम् । क्षीयमाणे चद्रे क्रूरिते तदा मातृमरणम् । मातृपितृगृहे चंद्रे शनिकुजाक्रांते यागः । पितृमातृगृहपौ वक्रीभूत्वा स्वं स्वं स्थानं पश्यंतौ क्रूरितौ च तदा योगः । पितृगृहेशः सहमपश्च क्रूरितौ अशोभनस्थाने सहमे चानयोर्हृद्पे पतिक्रूरिते तदा मातापित्रोरल्पस्थितिः ॥ २० ॥

पितृगृहपितृरंध्रपेत्थशाले रविशशिनोः पतितस्थयोस्तदंतः ॥ अहनि तनुगते कुमृत्युरारेऽकेदृशि मंदस्थकुजाब्जयोर्जनन्याः ॥ २१ ॥

पितृगृहेति । पितृगृहेशः पितृगृहादष्टमेशेनेत्थशाली चंद्रार्कौ पतितभागौ तदा मातापित्रोर्निधनत्वम् । दिवा जन्मनि लग्नगे भौमेऽर्केण शत्रुदृशा दृष्टे शुभदृशा हीने पितुर्मरणम् । मंदे भौमे सप्तमगे मातुर्मृत्युः ॥ २१ ॥

शशिनि च कुजसंयुते कुगेहे भवति मृतिः प्रसवक्षणे जनन्याः ॥ क्षयिशशिकुजयोगतः पतेः प्राङ्निशि च रवींदुगे पिता म्रियेत ॥ २२ ॥

शशीति । सभौमे चंद्रे शनिपवितभागे शुभदृशा हीने तदा प्रसवसमये मातुर्मृत्युः । कुगेहे क्षीणचंद्रे भौमयोगे पितुः प्राक् मातुः मृत्युः । रात्रिजन्मनि रवींदुगते भौमे कुगेहे तदा पिता म्रियते ॥ २२ ॥

सक्रूरमातृपितृसादसमभ्यदृष्ट्या-
ऽन्योन्यं पितुर्मरणमादित एव मातुः ॥
साकौं रवौ क्षितिसुते रविवामगे च
पित्र्ये गृहे शशिनि सूर्यसुते जनन्याः ॥ २३ ॥

सक्रेति । सक्रूरे मातृपितृसद्मेऽन्योन्यं समानदृष्टिः तदा पितृमरणात्पूर्वं मातुर्मृत्युः । सूर्ये शनियुते तदा पितृमरणं सूर्याद्वितीये भौमे तृतीयचतुर्थपंचमषष्ठस्थे वा योगः । चतुर्थस्थाने चंद्रे शनौ वा तदा मातुर्मृत्युः ॥ २३ ॥

भूपुत्रः पितृगृहराश्यसम्मुखश्चे-
देकांशांतरमुभयोः पितुर्विनाशः ॥
आये स्यात्सद्मपतिस्तु मंदयुक्तो
भागैकांतरमनयोरसंशयस्तत् ॥ २४ ॥

इति श्रीकर्मप्रकाशिकायां मनुष्यजातके पित्रोररिष्टाधिकारोऽष्टादशः ॥ १८ ॥

भूपुत्र इति । भौमो दशमस्थः पितृगृहभौमयोरेकांशांतरत्वा तदा पितुर्विनाशः । पितृसद्मपः एकादशगः शनियुतः

तयोरप्येकांशातगमिति कृत्वा वर्षोत्तरं पितृमरणम् । यथाशांतरं तत्तत्समानि वर्षाणीति ज्ञेयम् ॥ २४ ॥

इति श्रीकर्मप्रकाशिकावृत्तौ अष्टादशः पितृगंडाताधिकारः१८॥

---

## अथ स्त्रीजातकाधिकारः ।

पुंसः फलं यदिह कीर्तितमायुराद्य-
माद्यैस्तदेव किल योषिति कल्पनीयम् ॥
भर्तृस्थितिप्रणयसंततिशीलसौख्या-
स्तस्यास्तु पंच यवनाभिहितानि पश्येत् ॥१॥

अथ स्त्रीजातकं निरूप्यते-पुंस इति । इहास्मिन् ग्रंथे पुरुषस्यायुराद्य कृत्वा पूर्वैराचार्यैर्यत्कीर्तितं तदेव किलेति निश्चयेन योषिति स्त्रिया कल्पनीयं तासां तु पुनः भर्तुः स्थितिः प्रणयो विनयः संततिः शीलसौख्यानि पंच यवनैरभिहितानि पश्येत् ॥ १ ॥

लग्नास्तभर्तृसहमेश्वरभार्गवाणां
योगे मिथो गृहगमे च तनौ शुभायाम् ॥
सद्भर्तृका निरधिकारिकुजार्कियुक्ता
वैधव्यभाग्भवति सौम्यदृशांतरेण ॥ २ ॥

लग्नास्तेति । लग्नं अस्तं सप्तमं भर्तृसहमशुक्राः एषामधिपाः एतेषां परस्परस्थाने सति योगो वा तदा सेदः शुभं च । एवं कुजार्कियोगश्चेद्वैधव्यं शुभदृष्टिराहित्ये सत्येवैतद्बोध्यम् ॥ २ ॥

लग्नास्तपत्रणयसादपमित्रभेषु
सौम्येषु सोडुपतितेषु पतेः प्रिया स्यात् ॥
एतैस्तु पापयुतदृग्भिरसौम्यता च
शुक्रस्य सप्तमगसौरिमहीजयोश्च ॥ ३ ॥

लग्नास्तपेति। लग्नपास्तपसद्मपाः शुभस्थानगाः शुभयुता-स्तदातिप्रिया भवति। विपर्यये वैरम्। शुक्रात्सप्तमगौ शनि-भौमौ तदा वै भर्तृकासंमता ॥ ३ ॥

द्वौ भर्तृभावतनुपतौ पतितेऽनुजो च
षष्ठेऽस्तपे मुथशिलेरिभुजा सशत्रुः ॥
शुक्राब्जयोरपि च दुर्भगतामुपेति
मिश्रैस्तु मिश्रफलमूह्यमहोऽनुसारात् ॥ ४ ॥

द्वौ भर्तृभागिति। तनुपः पतितभस्थः वक्रगस्तदा भर्तुरप्रिय-तायोगः। अस्तपः षष्ठेन मुथशिली तदा भर्ता शत्रुभयोत। एवं शुक्राब्जयोरपि दुर्भगतां प्राप्नोति। सप्तमेशः षष्ठगतो मित्रगः शुभैर्दृष्टः तदा मिश्रफलम्। चंद्रशुक्रौ षष्ठेशेन मुथशि-लितौ शुभेन तु न मुथशिलितौ मित्रगृहगौ तदा मिश्रफलम् ४॥

शुभा लग्ने शुक्रे सुतयुजि कुजार्किस्थसदने
नभस्त्यक्ते जीवे क्षणविरहिते चाप्तसदने ॥

पतिर्भर्त्रमद्गमपतिपरस्परक्षेत्रगो यदा तदा समौरव्या साक्षी च । सर्वेषु ग्रहेषु निजनिजहर्षस्थानगतेषु नाम नदादिगतेषु समौरव्या साक्षी च भवति ॥ १० ॥

इति श्रीकर्ममराशिवृत्तौ मनुष्यजातके एकोनविंश स्त्रीजातकाधिकारः ॥ १९ ॥

---

## अथ मिश्रप्रकीर्णाधिकारः ।

प्रायेण दुर्बोधममानसं यद्ग्रहर्क्षभावोऽजसि मिश्रदृश्ये ॥ तदुच्यते किंचिदिव प्रकीर्णविनिर्णयः संशयहृत्समासात् ॥ १ ॥

प्रायेणेति । स्पष्टोऽर्थः ॥ १ ॥

एको गृहे पुण्यवतां हि यावज्जीवं सुखी तद्विपरीतकोऽन्यः ॥ दुःखी तृतीयो धनधाम्नि जातो नीचान्वये स्यान्नृपतिश्चतुर्थः ॥ २ ॥

एको गृहे इति । जातकं चतुःप्रकारम् । एके राज्ञो गृहे जायंते यावज्जीवं राज्यं कुर्वंति । अन्ये अधमकुले जायंते तदाऽधमा दरिद्राः । अपरे राजकुले जाता अपि यावज्जीव अधन्या भवंति । केचिदधमकुलोत्पन्ना अपि राज्य कुर्वंति एवं चतुर्धा जातकं ज्ञेयम् ॥ २ ॥

केंद्रे विलग्नेशरवीदवश्चेत्कृतेत्थशाले मकबू-

लग्नैः ॥ केंद्रस्थितैरुत्तमजन्मसौख्यमाजन्म तद्व्यत्ययतो विलोमम् ॥ ३ ॥

केंद्रे इति । लग्नेशसूर्यचंद्राः केंद्रगास्तद्राशिस्वामिभिः कंबूल- .. केंद्रगैः लग्नैरित्यशाळभाजस्तदा राजकुलोत्पन्ना आजन्म सुखं कुर्वंति । लग्नेशसूर्यचंद्रा इंदुवारस्थाः कैश्चिदप्यनित्थ- दारिद्र्योत्पन्ना यावज्जीवं दरिद्रा एव ॥ ३ ॥

लग्नेशचंद्रोष्णरुचोऽथ केंद्रे तदीशयोगा पतितस्थपापैः ॥ पापाश्च ते चेत्पतितेश्वराः स्युः प्राग्भद्रमग्रे च दरिद्रभाजः ॥ ४ ॥

लग्नेशेति । लग्नेशचंद्रसूर्याः केंद्रस्थास्तद्राशिस्वामिनः पति- तस्थैः इत्यशालिनो वा पतितस्थानस्वामिभिः क्रूरैरित्थशालिनः तदा राजकुलोत्पन्ना अपि दरिद्राः भवंति । राज्यं चादौ लब्ध्वा राज्यात्प्रतिनिवर्तते ॥ ४ ॥

हीना विलग्नेशदिनेशचंद्रास्तत्केंद्रसौम्यैश्च तदीशयोगः ॥ सौम्याश्च ते चेत्पतितेश्वराः स्यु राजा भवेन्नीचकुलेऽपि जातः ॥ ५ ॥

हीना इति । लग्नेशसूर्यचंद्राः हीनबला नीचस्थाः पतित- स्थानगाः वा तद्राशिस्वामिनः शुभयुक्ताः केंद्रगाः शुभेत्थ- शालिनस्ते चेत्पतितस्थानेश्वरास्तदा नीचकुले जातोऽपि राजा भवेत् ॥ ५ ॥

तयोरप्येकांशातगमिति कृत्वा वर्षोत्तरं पितृमरणम् । यथांशां-
तरं तत्तत्समानि वर्षाणीति ज्ञेयम् ॥ २४ ॥
इति श्रीकर्मप्रकाशिकावृत्तौ अष्टादशः पितृगंडांताधिकारः १८॥

## अथ स्त्रीजातकाधिकारः ।

पुंसः फलं यदिह कीर्तितमायुराद्य-
माद्यैस्तदेव किल योषिति कल्पनीयम् ॥
भर्तृस्थितिप्रणयसंततिशीलसौख्या-
स्तस्यास्तु पंच यवनाभिहितानि पश्येत् ॥ १॥

अथ स्त्रीजातकं निरूप्यते—पुंस इति । इहास्मिन् ग्रंथे पुरुषस्यायुराद्यं कृत्वा पूर्वैराचार्यैर्यत्कीर्तितं तदेव किलेति निश्चयेन योषिति स्त्रियां कल्पनीयं तस्यां तु पुनः भर्तुः स्थितिः प्रणयो विनयः संततिः शीलसौख्यानि पंच यवनैरभिहितानि पश्येत् ॥ १ ॥

लग्नास्तभर्तृसद्मेश्वरभार्गवाणां
योगे मिथो गृहगमे च तनौ शुभायाम् ॥
सद्भर्तृका निरधिकारिकुजार्कियुक्ता
वैधव्यभाग्भवति सौम्यदृशांतरेण ॥ २ ॥

लग्नास्तेति । लग्नं अस्तं सप्तमं भर्तृसद्मशुक्राः एषामधिपाः एतेषां परस्परसंस्थाने सति योगो वा तदा स्नेहः शुभं च । एवं कुजार्कियोगश्चेद्वैधव्यं शुभदृष्टिराहित्ये सत्येवैतद्बोध्यम् ॥ २ ॥

लग्नास्तपगणयसादृपमित्रभेषु
सौम्येषु सोडुपतितेषु पतेः प्रिया स्यात् ॥
एतैस्तु पापयुतदृग्भिरसौम्यता च
शुक्रस्य सप्तमगसौरिमहीजयोश्च ॥ ३ ॥

लग्नास्तपेति । लग्नास्तपसहमपाः शुभस्थानगाः शुभयुता-
स्तदातिप्रिया भवति । विपर्यये वैरम् । शुक्रात्सप्तमगौ शनि-
भौमौ तदा च भर्तृकासंगता ॥ ३ ॥

द्वौ भर्तृभाक्तनुपतौ पतितेऽनुजौ च
पष्ठेऽस्तपे मुथशिलेरिभुजा सशत्रुः ॥
शुक्राब्जयोरति च दुर्भगतामुपैति
मिश्रैस्तु मिश्रफलमूह्यमहोऽनुसारात् ॥ ४ ॥

द्वौ भर्तृभागिति । तनुपः पतितभस्थः वक्रगस्तदा भर्तुरभियो-
गयोगः । अस्तपः षष्ठेन मुथशिली तदा भर्ता शत्रुभयेन ।
एवं शुक्राब्जयोरतीव दुर्भगतां प्राप्नोति । समयेशः षष्ठगतो
मित्रगः शुभैर्दृष्टः तदा मिश्रफलम् । चंद्रशुक्रौ षष्ठेशेन मुथशि-
लितौ शुभेन तु न मुथशिलितौ मित्रगृहगौ तदा मिश्रफलम् ४॥

शना लग्ने शुक्रे द्युनयुजि कुजार्कस्यसदने
नभस्यब्जे जीवे क्षणविरहिते चापसतभे ॥

पतिर्भर्तृमहमपतिपरस्परक्षेत्रगो यदा तदा ससौख्या साध्वी च । सर्वेषु ग्रहेषु निजनिजहर्षस्थानगतेषु नाम नंदादिगतेषु ससौख्या साध्वी च भवति ॥ १० ॥

इति श्रीकर्मप्रवाशिवृत्तौ मनुष्यजातके एकोनविंशः स्त्रीजातकाधिकारः ॥ १० ॥

## अथ मिश्रप्रकीर्णाधिकारः ।

प्रायेण दुर्बोधममानसं यद्ग्रहर्क्षभावोजासि मिश्रहश्ये ॥ तदुच्यते किंचिदिव प्रकीर्णविनिर्णयः संशयहृत्समासात् ॥ १ ॥

प्रायेणेति । स्पष्टोऽर्थः ॥ १ ॥

एको गृहे पुण्यवतां हि यावज्जीवं सुखी तद्विपरीतकोऽन्यः ॥ दुःखी तृतीयो धनधाम्नि जातो नीचान्वये स्यान्नृपतिश्चतुर्थः ॥ २ ॥

एको गृहे इति । जातकं चतुःप्रकारम् । एके राज्ञो गृहे जायंते यावज्जीवं राज्यं कुर्वंति । अन्ये अधमकुले जायंते तदाऽधमा दरिद्राः । अपरे राजकुले जाता अपि यावज्जीवं अधन्या भवंति । केचिदधमकुलोत्पन्ना अपि राज्य कुर्वंति एवं चतुर्धा जातकं ज्ञेयम् ॥ २ ॥

केंद्रे विलग्नेशरवींदवश्चेत्कृतेत्थशाले मकबू-

लग्नेटः ॥ केंद्रास्थितैरुत्तमजन्मसौख्यभाजन्म तद्व्यत्ययतो विलोमम् ॥ ३ ॥

केंद्रे इति । लग्नेशसूर्यचंद्राः केंद्रगास्तद्राशिस्वामिभिः कंबूल-कर्त्तारः केंद्रगैः लग्नेत्थशाऽभाजस्तदा राजकुलोत्पन्ना आजन्म राज्यं कुर्वंति । लग्नेशसूर्यचंद्रा इंदुवारस्थाः केचिदप्यनित्थ-शालाः दरिद्रोत्पन्ना यावज्जीवं दरिद्रा एव ॥ ३ ॥

लग्नेशचंद्रोष्णरुचोऽथ केंद्रे तदीशयोगा पतितस्थपापैः ॥ पापाश्च ते चेत्पतितेश्वराः स्युः प्राग्भद्रमग्रे च दरिद्रभाजः ॥ ४ ॥

लग्नेशेति । लग्नेशचंद्रसूर्योः केंद्रस्थास्तद्राशिस्वामिनः पति-तस्थैः इत्थशालिनो वा पतितस्थानस्वामिभिः क्रूरैरित्थशालिनः तदा राजकुलोत्पन्ना अपि दरिद्राः भवंति । राज्यं चादौ लब्ध्वा राज्यात्पतितनिवर्तते ॥ ४ ॥

हीना विलग्नेशदिनेशचंद्रास्तत्केंद्रसौम्यैश्च तदीशयोगः ॥ सौम्याश्च ते चेत्पतितेश्वराः स्यू राजा भवेन्नीचकुलेऽपि जातः ॥ ५ ॥

हीना इति । लग्नेशसूर्यचंद्राः हीनबला नीचस्थाः पतित-स्थानगाः ॥ तद्राशिस्वामिनः शुभयुक्ताः केंद्रगाः शुभेत्थ-शालिनस्ते चेत्पतितस्थानेश्वरास्तदा नीचकुले जातोऽपि राजा भवेत् ॥ ५ ॥

द्युमानके पुण्यरवी यदि स्तः केंद्रे बलिष्ठः शुभयुतदृष्टौ ॥ रात्राविषपादुश्च बृहत्प्रमाण-मभ्येति जातो विपरीततोऽन्यत् ॥ ६ ॥

द्युमानक इति । दिवा जन्मनि यदा रविः पुण्यसहमकेंद्रगो बलयुतः शुभयुतदृष्टः तदा महत्त्वं प्राप्नोति । एवं रात्रिजन्मनि पुण्यचंद्रौ केंद्रगौ बलयुतौ शुभयुक्तदृष्टौ तदा महत्त्वं प्राप्नोति । एतद्वैपरीत्ये लघुत्वं प्राप्नोति ॥ ६ ॥

कर्माथे बहुविधभंगयो हि पूर्वै-
र्निर्दिष्टाः प्रकटफलार्थमत्र तासाम् ॥
सांकर्यादनवगमोऽथ सम्यगीक्ष्य
संदेहच्छिदुरमिदं प्रकीर्णकोक्तम् ॥ ७ ॥

अथालंकारमाह ।

श्रीसिद्धिकोक्तगुरुतंत्रमिहाऽञ्जवृदा-
दर्थोदबिंदुमुपजीव्य मदुक्तिशुक्त्या ॥
जातं नृजन्मफलमौक्तिकमेतदेव
लब्ध्वा गुणैः सहृदयोरसि हारलीलाम् ॥ ८ ॥
जिज्ञास्ये जन्मफलं निधिमिव यदि की-

त्रैलोक्यक्षितिपालमौलिसकलव्यापारपारंगमः
प्राग्वाटान्वयधुर्यभूपसचिवः श्रीचंडसिंहा-
ह्वयः॥ श्रीमाञ्शोभनदेव इत्यभिजने तस्या-
भवत्सज्जनः श्रीसामंत इति प्रशांतसुमति-
स्तस्मादभूदंगभूः ॥ १० ॥

तस्यात्मजः समजनिष्ट कुमारसिंह-
नामा प्रमाणितगुरुर्गरिमाश्रयगेहः ॥
तत्सूनुना गणकभृंगमुदे स्मरेण
गंधोऽभ्युदध्रियत ताजिकपद्मकोशात् ॥ ११॥

इति श्रीकुमारसिंहात्मजसमरसिंहसमुद्धृते कर्मप्रका-
शिकाभिधे प्रकीर्णाधिकारो विंशः ॥ २० ॥

कर्मार्थमित्यादिश्लोकाः स्पष्टार्था एव॥७॥८॥९॥१०॥११॥

इति श्रीमनुष्यजातके कर्मप्रकाशिकावृत्तौ
प्रकीर्णाधिकारो विंशः समाप्तिमगात् ॥

इति मनुष्यजातकं संपूर्णम् ।

---

अथ मनुष्यजातकस्य स्वकृतोदाहरणमारभ्यते ॥ ॥ हेरंबं गिरिजापतिं ग्रहपतिं लक्ष्मीपतिं शारदां नत्वा ग्रंथचमत्कृतिं सरलतायुक्तिं मनालोक्य च ॥ कृत्वोदाहरणं नृजातकमिदं विद्वन्मुदः कारणं बालानां हितकाम्यया विशदतां नीतं सतामग्रतः ॥ १ ॥ श्रीदव्यङ्कुलैरवामृतवपुः श्रीमाञ्जटाशंकरस्तस्येदं तनयेन शास्त्रनिपुणेन व्योमसंचारिणाम् ॥ मत्वोन्मथ्य मनुष्यजातकमिदं मोल्लेखितोदाहृतिः श्रीमच्छ्रीधरपंडितेन विदुषा बालोपकाराय वै ॥ २ ॥ देवदत्तनाम्नः कस्यचित्पुरुषस्य जन्मसमये ग्रहभावादि प्रदर्श्यते तत्रादौ जन्मकालश्च संवत् १९२२ शके १७८७ चैत्रे मासि शुक्ले पक्षे तिथौ २ सौम्यवासरे घ ० प १६ अश्विनीभे घ ११ प.२६ । वैधृतियोगे घ. १० प. ३७ कौलवकरणे एवमादिपंचांगशुद्धौ तद्दिने श्रीमन्मार्तंडमंडलोदयादिष्टघ. ४८ प ५९ समये देवदत्तस्य जन्म । अत्र निषेककालात्स्पष्टजन्मेष्टम् ४८ । ४३ । अस्योदाहरणमग्रे प्रदर्श्यते ।

जन्मांगचक्रम्.




सूर्यादयो ग्रहा स्पष्टा स्यु

| सू | च | म | बु | बृ | शु | श | रा. | के |
|---|---|---|---|---|---|---|---|---|
| ११ | | २ | ११ | ८ | ० | ८ | ६ | ० |
| १७ | २२ | ७ | २ | ८ | २९ | ९ | ९ | ९ |
| २८ | ५ | ९ | ३३ | १६ | ३६ | २३ | ३३ | ३३ |
| ९ | ९ | १६ | ५६ | ४२ | ५५ | ४६ | ५५ | ५५ |
| ५९ | ८४६ | २७ | १०१ | २ | २९ | ४ | ३ | ३ |
| २१ | १८ | १४ | ३० | ४६ | ५३ | १२ | ११ | ११ |

शोध्यं तदंशाः १५ । ७ । २८ अंकलवे सूर्यस्योच्चबलं १७ । २८ । जातं । एवं सर्वत्र ज्ञेयम्.

प्रथमाधिकारे श्लोक १३ उच्चनीचचक्रम् ।

| सू. | चं. | मं. | बु. | गु. | शु. | श. | ग्र. |
|---|---|---|---|---|---|---|---|
| ० १० | १ ३ | ९ २८ | ५ १५ | ३ ५ | ११ २७ | ६ २० | उ. |
| ६ १० | ७ ३ | ३ २८ | ११ १५ | ९ ५ | ५ २७ | ० २० | नी. |

अथ हद्दाबलमाह । सूर्यः ११ । १७ । २८ बुधहद्दायां सूर्यस्य बुधः शत्रुः अत एव शत्रुहद्दाबलं ० । ३ । ४५

प्रथमाधिकारे चतुर्दशश्लोकमारभ्य एकोनविंशतिपर्यंतं हद्दाचक्रम् ।

| मे. | वृ. | मि. | क. | सि. | कं. |
|---|---|---|---|---|---|
| ८ बृ. | ८ शु. | ६ बु. | ७ मं. | ६ बृ. | ७ बु. |
| ६ शु. | ७ बु. | ६ शु. | ६ शु. | ५ शु. | १० श. |
| ८ बु. | ८ बृ. | ५ बृ. | ६ बु. | ७ श. | ४ बृ. |
| ५ मं. | ५ श. | ७ मं. | ७ बृ. | ६ बु. | ७ मं. |
| ५ श. | २ मं. | ६ श. | ४ श. | ६ मं. | २ श. |
| तु. | वृ. | ध. | म. | कुं. | मी. |
| ६ श. | ७ मं. | १२ बृ. | ७ बु. | ७ बु. | १२ शु. |
| ८ बु. | ४ शु. | ५ शु. | ७ बृ. | ६ शु. | ४ बृ. |
| ७ बृ. | ८ बु. | ४ बु. | ८ शु. | ७ बृ. | ३ बु. |
| ७ शु. | ५ बृ. | ५ मं. | ४ श. | ५ मं | ९ मं. |
| २ मं. | ६ श. | ४ श. | ४ मं. | ५ श. | २ श. |

अथ द्रेष्काणबलम्। सूर्यः ११। १७। २८ द्वितीये गुरुद्रेष्काणे स्थितः सूर्यस्य च गुरुः शत्रुः अत एव शत्रुबलं ०। २। ३०

प्रथमाधिकारे विंशतिश्लोकोक्तं द्रेष्काणचक्रम्।

| | मे | वृ | मि. | क. | सि. | क. |
|---|---|---|---|---|---|---|
| १० | मं | बु. | बृ. | शु. | श. | सू. |
| २० | सू. | चं. | मं. | बु. | बृ. | शु. |
| ३० | शु | श | सू. | सो. | मं. | बु. |
| | तु. | वृ. | ध. | म. | कुं. | मी. |
| १० | सो | मं. | . | बृ. | शु. | श. |
| २० | श. | सू. | सो. | मं. | बु. | बृ. |
| ३० | बृ. | शु. | श. | सू. | सो. | मं. |

अथ नवमांशबलम्। सूर्यः ११। १७। २८ गुरुनवमांशे स्थितः सूर्यस्य गुरुः शत्रुः अत एव शत्रुबलं०। १। १५ एवं सर्वग्रहाणां बोध्यम्।

## पंचवर्गिबलचक्रम् ।

| सू | च | म | बु. | गु | शु | श | ग्र |
|---|---|---|---|---|---|---|---|
| ०<br>७<br>३० | ०<br>१२<br>३० | ०<br>७<br>३० | ०<br>७<br>३० | ०<br>३<br>[illegible]० | ०<br>१२<br>३० | ०<br>७<br>३० | गृ |
| ०<br>१७<br>२२ | ०<br>१८<br>४४ | ०<br>५<br>३९ | ०<br>१<br>३७ | ०<br>२<br>५८ | ०<br>१६<br>४९ | ०<br>१<br>१० | उ |
| ०<br>३<br>४५ | ०<br>११<br>१५ | ०<br>११<br>१५ | ०<br>७<br>३० | ०<br>१५<br>० | ०<br>३<br>४५ | ०<br>७<br>३० | ह |
| ०<br>२<br>३० | ०<br>२<br>३० | ०<br>२<br>३० | ०<br>२<br>३० | ०<br>१<br>३० | ०<br>१०<br>० | ०<br>२<br>३० | द्रे |
| ०<br>१<br>१५ | ०<br>१<br>१५ | ०<br>१<br>१५ | ०<br>१<br>१५ | ०<br>१<br>१५ | ०<br>३<br>४५ | ०<br>३<br>४५ | न |
| ०<br>३२<br>२९ | ०<br>५६<br>१४ | ०<br>२८<br>९ | ०<br>२०<br>२२ | ०<br>५१<br>४३ | ०<br>५६<br>४२ | ०<br>२२<br>२५ | यो |
| ८<br>७ | १४<br>३ | ७<br>२ | ५<br>५ | १२<br>५६ | १४<br>१२ | ५<br>३६ | ब |

क्रमाद्धर्षस्थानबलं ज्ञेयम् । द्वितीयं स्वगृहे स्थितत्वात्सूर्यादिग्रहाणां हर्षबलम् । अत्र तु सूर्यस्य स्वगृहेऽभावः अत एव हर्षबलं न स्यादिति । तृतीयं हर्षबलं दिवा जन्मनि पुरुषग्रहाणां हर्षबलं अत्र तु रात्रौ जन्म अत एव सूर्याद्धर्षबलं न स्यात् । चतुर्थं हर्षबलं जन्मलग्नमारभ्य चतुर्थग्रहपर्यंतं सप्तममारभ्य दशमपर्यंतं च स्त्रीग्रहाणां हर्षबलम् । शेषग्रहेषु पुरुषग्रहाणां हर्षबलम् । अत्र तु पुरुषग्रहः सूर्यः पुरुषग्रहे पतितः अतः हर्षबलं स्यात् । अधोलिखितकोष्ठके सूर्यादिग्रहाणां हर्षबलं प्रत्येकस्थाने पंचपंचेति परिमाणतो विंशतिसंख्याकं यदा भवेत् तदा तत्पूर्णं स्यात् ततो न्यूनं चेदपूर्णमित्यवगन्तव्यम् । उक्तं च पद्धतिभूषणे । ' हर्षान्विता हर्षपदे पंचविंशोपका मताः । हर्षस्थानचतुष्कस्थः खेटः स्यात्पूर्णहर्षितः ॥ १ ॥ ' इति ।

प्रथमाधिकारे त्रिशत्तमश्लोकोक्त हर्षबलचक्रम् ।

| सू | च | म | बु | बृ | शु | श | |
|---|---|---|---|---|---|---|---|
| १ | ३ | ६ | १० | ११ | ५ | १२ | स्थानात् बलम् |
| ५ | ४<br>० | १<br>८ | ३<br>६ | १<br>१७ | २<br>७ | १०<br>११ | स्वग्रहात् बलम् |
| सू | ० | म | ० | बृ | ० | ० | दिवा जन्मनि पुरुषग्रहाणा बलम् |
| ० | च | ० | बु | ० | शु | श | रात्रौ जन्मान स्त्रीग्रहाणा बलम् |
| ४।५<br>६।१०<br>११।१२ | | ४।५<br>६।१०<br>११।१२ | | ४।५<br>६।१०<br>११।१२ | | | पुरुषग्रहे पुरुषग्रहाणा बलम् |
| ० | १।२<br>३।७<br>८।९ | | १।२<br>३।७<br>८।९ | | १।२<br>३।७<br>८।९ | १।२<br>३।७<br>८।९ | स्त्रीग्रहे स्त्रीग्रहाणा बलम् |

उदाहरणहर्षबलचक्रम् ।

| सू | च | म | बु | बृ | शु | श | ग्र |
|---|---|---|---|---|---|---|---|
| ० | ० | ० | ० | | ५ | ० | स्था |
| ० | ० | ० | ० | ५ | ० | ० | स्व |
| ० | ५ | ० | ५ | ० | ५ | ५ | दिवारात्री |
| ५ | ० | ० | ० | ० | [illegible] | ० | पुरुष स्त्री |
| ५ | ५ | ० | ५ | ५ | १० | ५ | याग |

दिने सूर्यभोग्यांशाः १२ । ३३ । चंद्रभुक्तांशाः २२ । ५ । युताः ३४ । ३७ । जाताः सूर्यचंद्रयोर्मध्ये राशिर्न स्यात् ३४ । ३७ । अयं सूर्योनचंद्रो जातः अत्र तु लग्नभुक्तांशा- २८ । १८ दिति अत एव लग्नभुक्तांशाः २८ । १८ पिंडमध्ये योज्यं जातं ६२ । ५५ । धनलग्नस्य संस्कारो जातस्ततो लग्नाद्वितीयभवनं मकरमारभ्य त्रिंशदंशैरेकराशिकल्पनया अत्र तु द्विराश्यंशाः ६० । पिंड ६२ । ५५ । मध्ये शोधिताः शेषं २ । ५५ । मीनं न शुध्यति अत एव मीनलग्नं पुण्यसद्दमं ११ । २ । ५५ ॥ अथ रात्रौ चंद्रभोग्यांशाः ७ । ५५ । सूर्य- भुक्तांशैः १७ । २८ । युताः २५ । २३ चंद्रार्कयोरंतरस्य- राश्यं १० शैः ३०० । युताः ३२५ । २३ । जातश्चंद्रोन- सूर्यः । अत्र चंद्रार्कयोर्मध्ये लग्नमस्त्यतो लग्नभोग्यांशाः १ । ४२ । भोक्तानामंशानां मध्ये ३२५ । २३ । शोधिताः शेषं ३२३ । ४१ । ततो लग्नाद्वितीयभवनं मकरमारभ्य दशराश्यंशाः ३०० । अंशसमूहे शोधिताः शेषं २३ । ४१ । वृश्चिकराश्यंशाः ३० । न शुध्यन्त्यतो वृश्चिकत्रयोविंशत्यंशांशे विश्रांतिर्जाता ७ । २३।४१ । इदं पुण्यसद्दमम् ॥ अथ सुगम- प्रकारेण पुण्यादिसद्दमानयनमुक्तं संज्ञातंत्रे । 'सूर्योनचंद्रान्वित- मह्नि लग्नं विदर्कयुक्तं निशि पुण्यसंज्ञम् । शोध्यर्क्षशुद्धचाश्रय- मान्तराले लग्नं न चेत्सैकभमेतदुक्तम् ॥' अत्रोदाहरणम् । स्पष्टः सूर्यो राश्यादिः ११ । १७ । २८ । स्पष्टचंद्रो राश्यादिः ० । २२ । ५ । लग्नं राश्यादिः ८ । २८ । १८ । दिवा जन्मनि

चंद्रमध्ये सूर्यः शोधितः शेषम् ३।४।३७। शोध्यर्क्ष इति शोध्यते न्यूनः क्रियते यो ग्रहः स शोध्यस्तस्य राशिं शोध्यर्क्षं यस्मिन्ग्रहे शोध्यो ग्रहः शोध्यते स शुद्ध्याश्रयो ग्रहस्तस्य भं राशिः अनयो राश्यादिग्रहयोर्मध्ये शोध्यग्रहराश्यादिमारभ्य शुद्ध्याश्रयग्रहराश्यंशावधि मध्ये चेल्लग्नं न स्यात्तदैतत् सर्वत्र सहममेकराशिसहितं कार्यं यदि तयोर्मध्ये लग्नं स्यात्तदैकराशियुतं न कार्यमित्यर्थः। अत्र तु सूर्यराशेः सकाशात् चंद्रराशिपर्यंतं लग्नं नास्ति अतः सैकम् १ युतं ३।४।३७। लग्नं ८।२८।१८। युतं ११।२।५५। जातं पुण्यसहमं रात्रौ जन्मनि सूर्यात् ११।१७।२८। चंद्रः ०।२२।५। ऊनं १०।२५।२३। जातं अत्र चंद्रराशेः सकाशात् सूर्यराशिपर्यंतं लग्नं भवति अतः सैकं एकराशियुतं न कार्यं एवं सर्वत्रापि बोध्यम् ॥ लग्नं ८।२८।१८। युतं ७।२३।४१। जातं पुण्यसहमम् ॥

## अथ पुण्यादिसहमचक्रम् ।

| पुण्य | विद्या | यशः | वधन | पिता | माता | भ्राता | दाराः | सुतः | शत्रुः | मित्र |
|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ११ | ८ | ७ | २ | ९ | १० | ११ | ४ | ७ | ८ |
| २३ | २ | १३ | १४ | ६ | २४ | २७ | ६ | १४ | २७ | १३ |
| ४१ | ५५ | ४३ | १० | २३ | ४७ | ११ | २६ | २१ | ४६ | ४३ |

## दिवा जन्मनि द्वात्रिंशत्सहमसारणीचक्रम् ।

चतुर्थाधिकारोक्तं सहमचक्रम् ।

| | एतेयुक्ताः | एतभ्यः | एत ऊनाः | |
|---|---|---|---|---|
| १ | लग्नयुते. | चंद्रात् | सूर्यं | पुण्यं |
| २ | लग्नयु. | सूर्यात् | चंद्रं | वित् |
| ३ | लग्नय. | विद्यासहमात् | पुण्यसहमं | प्रणयः |
| ४ | लग्नयु. | पुण्यसहमात् | भौमं | शौर्यं |
| ५ | लग्नयु. | गुरु. | पुण्यसहमं | यशः |
| ६ | लग्नयु. | धनभावात् | धनस्वामि | स्वं |
| ७ | लग्नय. | पुण्यात् | शनि | बधनं |
| ८ | लग्नयु. | शनेः | सूर्यं | पैतृकं |
| ९ | लग्नयु. | शुक्रात् | चंद्र | मातृकं |
| १० | लग्नयुते. | जीवात् | शनि | भ्रातृकं |
| ११ | लग्नयु. | शनेः | गुरुं | विभूतिः |
| १२ | लग्नयु. | सितात् | सूर्यं | दाराः |
| १३ | शनियुक्. | अष्टमात् | चंद्र | मरणं |
| १४ | लग्नयु. | नवमात् | नवमस्वामि. | अध्वा |
| १५ | लग्नयु. | असितात् | सितं | आशा |
| १६ | लग्नयु. | सूर्योच्चात् | सूर्यं | नृपः |
| १७ | लग्न. | भौमात् | शनि | अरिः |
| १८ | लग्न. | गुरुतः | इंदुं | सुतः |
| १९ | लग्न. | भृगुजात् | इंदुं | पुत्रि. |
| २० | लग्न. | भौमात् | बुध | कर्म |

| २१ | लग्न. | गुरुतः | भौमं | क्षमा |
|---|---|---|---|---|
| २२ | चंद्रयु. | जीवात् | सूर्यं | गुरुता |
| २३ | लग्न. | यमात् | जीव | जीवः |
| २४ | लग्न. | लग्नात् | चंद्रं | गदः |
| २५ | लग्न. | गुरोः | पुण्य | मित्रं |
| २६ | लग्न. | सितात् | शनिं | उद्वाहः |
| २७ | लग्न. | भूसुतात् | सितं | श्रुतं |
| २८ | लग्न. | सुरेज्यात् | शनि | वासना |
| २९ | बुध. | गुरोः | पुण्यं | बल |
| ३० | बुध. | गुरोः | पुण्यं | वपुः |
| ३१ | लग्न. | भौमात् | बुध | व्यापारः |
| ३२ | लग्न. | चंद्रात् | शनि | हस्तक्रिया. |

## रात्रौ जन्मनि द्वात्रिंशत्सहमसारणीचक्रम् ।

### चतुर्थाधिकारोक्त सहमचक्रम् ।

| | एते युक्ताः | एतेभ्यः | एते ऊनाः | |
|---|---|---|---|---|
| १ | लग्नयु. | सूर्यात् | चंद्र | पुण्यं |
| २ | लग्नयु. | चंद्रात् | सूर्यं | वित् |
| ३ | लग्नयु. | पुण्यसहमात् | विद्यासहमं | प्रणपः |
| ४ | लग्नयु. | भौमात् | पुण्य | शौर्यं |
| ५ | लग्नयु. | पुण्यसहमात् | गुरु | यशः |
| ६ | लग्नयु. | धनभावात् | धनस्वामि. | स्व |
| ७ | लग्नयु. | शनितः | पुण्यं | बंधन |
| ८ | लग्नयु. | सूर्यात् | शनि | पैतृकं |
| ९ | लग्नयुक्. | चंद्रात् | शुक्र | मातृ. |

| | | | | |
|---|---|---|---|---|
| १० | लग्नयुत. | जीवात् | शनि | भ्रातृ. |
| ११ | लग्नयुत | गुरुतः | शनि | विभूतिः |
| १२ | लग्न. | सितात् | सूर्य | दाराः |
| १३ | शनियुक्. | अष्टमात् | चंद्र | मरणं |
| १४ | लग्न. | नवमात् | नवमस्वामि. | अंधा. |
| १५ | लग्न. | आसितात् | सितं | आशा. |
| १६ | लग्न. | चंद्रोच्चात् | चंद्र | नृपः |
| १७ | लग्न. | भौमात् | शनिं | अरिः |
| १८ | लग्न. | गुरुतः | इंदुं | सुतः |
| १९ | लग्न. | भृगुजात् | इंदुं | पुत्री. |
| २० | लग्न. | बुधात् | भौमं | कर्म. |
| २१ | लग्न | गुरुतः | भौमं | क्षमा. |
| २२ | सूर्ययु. | गुरुतः | चंद्रं | गुरुता. |
| २३ | लग्न. | जीवात् | यम | जीवः |
| २४ | लग्नयु. | लग्नात् | चंद्र | गदः |
| २५ | लग्नयु. | पुण्यसद्मात् | गुरुं | मित्रं |
| २६ | लग्नयु. | सितात् | शनि | सोद्वाहः |
| २७ | लग्नयु. | भृगुतात् | सितं | श्रुतं |
| २८ | लग्नयु. | शनितः | सुरेज्यं | धात्तना. |
| २९ | बुधयु. | पुण्यात् | गुरुं | बलं |
| ३० | बुधयु. | पुण्यात् | गुरु | वपः |
| ३१ | लग्नयु. | भौमात् | बुधं | व्यापारः |
| ३२ | लग्न. | शनितः | चंद्र | हस्तागया. |

अथ पंचमाधिकारोक्तनिषेककालोदाहरणमाह—जन्मलग्नोनचंद्रांशाः ११३ । ४६ । १९ । एभ्यो द्वादशभिर्भक्त्वा लब्धं दिनं ९ शेष ५ । ४६ । १९ । चतुर्विंशत्या गुणिताः १३८ । ३० । जातं द्वादशभिर्भक्त्वा लब्धं होरादि ११ । ३२ । ३० । पूर्वानीतं दिनं ९ युक्तं इदं द्विस्थं ९ । ११ । ३२ । ३० । चतुर्विंशत्या गुणिताः २२० । ३० । पंचदशभिः भक्तं लब्धं होरादि १४ । ४२ । २८ । एतत् चंद्रमसि भुवस्तलवर्तिनि पृथक्स्थेऽस्मिन् ९ । ११ । ३२ । ३० । हीनं ८ । २० । ५० । २ । अष्टममासि ध्रुवं २४५ । २१ । १७ । अनुपातदिवसादि ४ । ८ । ५४ । भुवस्तलवर्तिचंद्रलग्नात्पंचमस्थानस्थितत्वात् ध्रुवमध्ये योज्यं २५० । ६ । ११ । एते मूलध्रुवांकाः तेषां मध्ये पृथक्स्थहीनांका ८ । २० । ५० । २ । युतं २५८ । २७ । १ । २ । इदं त्रिंशद्धृतं ३० । लब्धं मासादि ८ । १८ । २७ । १ । पुनर्नित्यानंदेनोक्तम् ।
'व्यंगाब्जांशाः पृथक् त्रिघ्नाः खाब्ध्याप्तोना इनोद्धृताः ॥ खतत्वा २५० ढ्या हि तिथयो गर्भाजन्मावधिस्थिराः ॥'
इति । अस्योदाहरणम् । जन्मलग्नोनचंद्रांशाः ११३ । ४६ । १९ । पृथक् द्विधा स्थाप्य एकत्र त्रिघ्नाः ३४१ । १८ । ४५ । जातं इदं खाब्धि ४० । आप्तफलम् ८ । १३ । ४ । एते पृथक्स्थेभ्यो हीनांकाः १०५ । ३३ । ११ । एतं द्वादशोद्धृताः लब्धम् ८ । २० । ४६ । खतत्वमित २५० ध्रुवके युताः २५८ । २० । ४६ । जातं पूर्वतुल्यादिनानि स्युः अस्य संवत्

१९२१ । शके १७८६ । आषाढशुक्ल १४ चंद्रे प्रातः सूर्य- ३ । ३ । ३० । ५२ । गतिः ५७ । ९ । रविभोग्यकालः ४६ । ५ । ५ । अत्र जन्मचंद्रः ० । २१ । ४० । ३९ । एतदेव लग्नं अस्य भुक्तकालः १२४ । २२ । ३७ । उभयोर्योगः जातं १७० । २७ । ४२ । मध्योदयो घटि २६ । ८८ । भुक्तभोग्ययोर्मध्ये योज्यं २८ । ५८ । २७ । अस्य ६० । षष्टिभागे लब्धं ४७ । ३८ । २७ । जातं अत्र समये निषेकः इष्टम् । अस्मिन् समये रविः ३ । ४ । १६ । ११ । गतिः ५७ । ५ । चंद्रः ८ । २८ । १९ । ५६ । ग ८४४ । ३४ । लग्नं ० । २२ । ३६ । २६ ॥

अथ स्पष्टजन्मेष्टानयनमाह । निषेकशशी ८ । २८ । १९ । ५६ । जन्मलग्नं ८ । २९ । ४३ । ५१ । अनयोरंतरांशाः १ । २३ । ५५ । निजलग्नस्य ३३६ । उदयेन गुणिताः ६० । षष्टिभक्ताः लब्धं ० । १९ । ४० । जन्मेष्टमध्ये ४८ । ५९ । हीनं जातं स्पष्टजन्मेष्टम् ४८ । ४३ । २० । अस्मिन् समये सूर्यः ११ । १७ । २८ । ९ । चंद्रः ० । २२ । ५ । ५३ । लग्नं ८ । २८ । २० । १९ ॥ पुनः निषेकेष्टसाधनमाह- जन्मचंद्रः० । २२ । ५ । ५३ । निषेकलग्नं ० । २२ । ३६ । २६ । अनयोरंतरांशाः ० । ३० । ३३ । मेषलग्नोदयेन गुणिताः २२७ । ६० । षष्टिभक्ताः लब्धं ० । ४ । १ । ३५ । अत्र लग्नात् चंद्र ऊनः कृतः अत निषेकेष्टमध्ये ४७ । ३८ । २७ । हीनं जातं निषेकेष्टं ४७ । ३४ । २५ । ४० । अस्मिन्

समये सूर्यः ३ । ४ । १६ । ८ । चंद्रः ८ । २८ । १९ । लग्नं ० । २२ । ९ । २६ । पुनः निषेकराशिः ८ । २ १९ । ० जन्मलग्नं ८ । २८ । २० । १९ । अनयोरंतरां ० । १ । १९ । धनलग्नोदयेन गुणिताः ३६० । पुनः ६० षष्टिभागे लब्धांकाः । १४ । ४० । अत्र लग्नात् चंद्रोनं अ एव जन्मेष्टमध्ये ४८ । ४ । ५० । हीनं जातं जन्मेष्ट ४८ । ४३ । ५।१९ । अत्रार्कः ११ । १७ । ९।२८ । चंद्रः ० २२ । ५ । ९ । लग्नं ८ । २८ । १८ । ५४ । एवं पुनः पुनः संस्कारः क्रियते जन्मचंद्रः ० । २२ । ५ । निषेकलग्नं ० । २२ । ९ । समतुल्यत्वात् जन्मेष्टम् । ४८ । ४३ । स्पष्टमिति ज्ञेयं एवं सर्वत्र बोध्यम् ॥

अथ पंचाधिकारिचक्रम् ।

| भौमः | राशीशः |
|---|---|
| शनिः | उच्चेशः |
| भौमः | हद्देशः |
| भृगुः | द्रष्काणेशः |
| भृगुः | नवांशेशः |

| मध्यायुश्चक्रम् । | | | | | स्पष्टायुश्चक्रम् । | | | | |
|---|---|---|---|---|---|---|---|---|---|
| च. | म. | शु. | श | यो. | च. | मं | शु. | श. | यो. |
| ३९ | ६६ | ५९ | ४३ | १९३ | ९० | ३३ | ११ | २१ | ७५ |
| ६ | ० | ० | ० | ६ | ९ | ० | ३ | ६ | ७ |
| ० | ० | ० | ० | ० | १० | ० | ० | ० | १५ |
| ० | ० | ० | ० | ० | १५ | ० | ० | ० | ० |

अथायुर्निर्णयनवमाधिकारोक्तमुदाहरणमाह । तत्रादौ [illegible] रात्रौ जन्म चंद्रो मेषे मीनराशौ सूर्यः धनलग्ने [illegible] गतपर्वतमिथुनलग्नं एते हिल्लाजस्य चैवाधिकारिणः । उदाहरणम् चंद्रो मेषांशाः २२ । ५ अस्य भौमो राशीशः चंद्रराशेरुच्चं मकरं उच्चेशः शनिः हद्देशो भौमः द्रेष्काणेशो भृगुः नवांशेशो भृगुः एतेषां मध्ये यः स्वाधिकारी सः खत्तखुत्तः अत्र तु भृगोः स्वद्रेष्काणे स्थितत्वात्स्वाधिकारीशो भृगुरेव अत एव भृगुः खत्तखुत्तः पुनः शनिः एकादशस्थाने उच्चस्थितः हिल्लाजं चंद्रं पश्यति सः खत्तखुत्तः अत्र तु हिल्लाजसंज्ञकश्चंद्रः अत्र तु आयुःप्रदा ग्रहाः । चंद्रभौमभृगुशनयः आयुःप्रदाः रात्रौ जन्मनि चंद्रो हिल्लाजः अत एव चंद्रः मध्यमायुर्वर्षप्रदः ३९ । ६ । अयं चंद्रः केतुसंयुक्तः अतः चंद्रदत्तायुर्वर्षेभ्यः चतुर्थांशहानिः ९ । १० । १५ । जातं २९ । ७ । १५ । पुनः क्रूरदृष्टा चंद्रः दृष्टः अतः अर्धहानिः १४ । ९ । जातं ९ । १० । १५ ।

अथ नवमाधिकारे श्लोकः २० उत्तममध्यमादिवर्षप्रदाश्च

| सू | च. | म. | बु. | बृ. | शु. | श | ग्रहाः |
|---|---|---|---|---|---|---|---|
| १२० | १०८ | ६६ | ७६ | ७९ | ८२ | ५७ | केंद्रादिस्थानानि उत्तमा वर्षाणि १ । ७ । १० । |
| ३९ ६ | ३९ ६ | ४० ० | ४८ ० | ४३ ६ | ५५ ० | ४३ ० | मध्यनानि वर्षाणि ४ । ५ । ११ । |
| १९ | २५ | १५ | २० | १२ | ८ | ३० | अधमानि वर्षाणि २ । ३ । ९ । |
| १९ | २५ | १५ | २० | १२ | ८ | ३० | नेष्टमासाः ६ । ८ । १२ । |
| १९ | २५ | १५ | २० | १२ | ८ | ३० | अतिनष्टदिनानि |
| १९ | २५ | १५ | २० | १२ | ८ | ३० | नेष्टातिनेष्टमुहूर्ताः |

एवं चंद्रस्य स्पष्टायुः । पुनः द्विलाजस्य पंचाधिकारि भौमशनिशुक्राः आयुःप्रदाः तेषां वर्षाणि मं० ६६ शु० शा० ४३ एवं क्रमेण प्राप्तवर्षाणि हानिसंस्कारः भृगुमध्ये वद्धानिः शुक्रस्य स्पष्टायुः ११ । २ । शनिभौममध्येऽर्धह जाता भौमस्य वर्षाणि ३३ । शनेः वर्षाणि २१ । ६ । प्राप्तवर्षाणि चंद्रभौमशनिशुक्राणां सर्वेषां योगे जातं पर युर्वर्षमासादि ७५ । ७ । १५ । एवं रीत्या सर्वत्र बोध्यम्